## [ बालबोधिनी ]

**तस्मिन् योगेति।** स 'मारीचारि' राम 'व' भरत 'चिर' चिरकाल मन सम्पदुत्पादनेन 'रमयतु' क्रीडयतु। मारीचस्य अरिर्मारीचारि । मनस सम्पद्–इच्छा मन सम्पत्, तस्या उत्पादन–करण मन सम्पदुत्पादन तेन मन सम्पदुत्पादनेन। स क ? यो राम तस्मिन् क्षत्रियब्राह्मणे 'ऋषौ' विश्वामित्रे 'क्वापि' कुत्रचिदपि 'अग्रे' पुरत, क्वापि च 'पश्चाद्' अपरस्तात्, क्वचित् 'पार्श्वयो' वाम-दक्षिणयो पार्श्वयो 'वर्त्तमान' तिष्ठन् सन् 'बभ्राजे' रराज। किंलक्षण ? 'अहतरुचि' निर्मलकान्ति । किंलक्षणे ऋषौ ? 'योगाभियोगस्थिरवपुषि' तपोऽभ्यासेन निश्चलवपुषि। पूर्वं क्षत्रिय पश्चाद् ब्राह्मण क्षत्रियब्राह्मण तस्मिन्, "पूर्वकालैक०' [पाणिनि० २ १ ४९] इति समास । कस्मिन् क इव ? 'मेरौ कर्मसाक्षीव' यथा मेरौ पर्वत 'कर्मसाक्षी' श्रीसूर्य क्वापि अग्रे क्वापि पश्चात् क्वापि च पार्श्वयोर्वर्त्तमानो अहतरुचि सन् 'भ्राजते' शोभते। किंलक्षणो राम ? 'भ्रातृयुक्त' लक्ष्मणेन युत । किंलक्षण कर्मसाक्षी ? 'सविधगतविधु' सविध गत –समाप प्राप्त विधु –चन्द्रो यस्यासौ सविधगतविधु ॥ १८ ॥

*

**शृण्वन् पुण्याः कथास्ताः पथि कुशिकतनूजन्मना कथ्यमानाः,**
**स्नानं सानन्दचित्तः प्रतिनदि विदधद् दग्धदुःखाभिरद्भिः ।**
**पश्यन् कान्तारपङ्क्तीः पिकनिकरवतीर्भूतलोद्भूतकन्या-**
**रत्नन्यासैकभाण्डं निमिनगरमटन् पातु वः कैटभारिः ॥ १९ ॥**

## [ हृदयरञ्जनी ]

**शृण्वन्निति ।** स 'कैटभारि' कैटभस्य अरि –शत्रु राम 'व पातु' युष्मान् रक्षतु । किं कुर्वन् ? 'निमिनगर' जनकपुरं मिथिला 'अटन्' गच्छन् । किम्भूत नगरम् ? 'भूतलोद्भूतकन्यारत्नैकभाण्ड' भूतलाद् उद्भूता चासौ कन्या च तदेव रत्न तस्या भाण्ड–रत्नन्यासैकपेटी, कन्यारत्न सीता तस्या वासभूमि । पुन किं कुर्वन् ? 'ता कथा शृण्वन्' 'ता' प्रसिद्धा पुण्या पवित्रा कथा 'शृण्वन्' आकर्णयन्। कास्ता कथा ? 'कुशिकतनूजन्मना' कुशिकस्य तनू–शरीर तस्या जन्म यस्य स तेन विश्वामित्रेण 'कथ्यमाना' वाच्यमाना, **बालकाण्डे रामायणे** विश्वामित्रवचनव्याजेन वाल्मीकेन उक्ता । पुन किं कुर्वन् ? 'प्रतिनदि' नद्या नद्या 'दग्धदुःखाभिरद्भि' पानीयै हृतक्लेशैरुदकै स्नान 'विदधत्' कुर्वन्, अत एव 'सानन्दचित्त' निर्मलचेता । पुन किं कुर्वन् ? 'कान्तारपङ्क्ती पश्यन्' वनश्रेणीर्विलोकयन् । कान्ताराणां पङ्क्तय किंलक्षणा ?

ता 'पिकनिकरवती' पिकाना निकर—समूह कोकिलसमूहो विद्यते यासु ता। अथवा वर्णव्यत्ययेन 'कपिनिकरवती' वानरयुक्ताश्च। वर्णच्युतकालङ्कार ॥ १६ ॥

[ बालबोधिनी ]

शृण्वन्निति। स 'कैटभारि' राम 'व' युष्मान् 'पातु' रक्षतु। किं कुर्वन्? 'निमिनगर' विदेहान् 'अटन्' गच्छन्। किंलक्षणम्? 'भूतलोद्भूतकन्यारत्नन्यासैकभाण्ड' भुव—पृथिव्या तल भूतलम्, तस्माद् उद्भूत—सम्भूत भूतलोद्भूतम्, कन्यारत्नमिव कन्यारत्नम्, भूतलोद्भूत च तत् कन्यारत्न च भूतलोद्भूतकन्यारत्नम्, तस्य न्यास—गोपन तस्य एकभाण्ड—एकमेव स्थानम्। पुन किं कुर्वन्? 'पथि' मार्गे 'ता' पुण्या 'कथा' वार्ता शृण्वन्। किंलक्षणा कथा? 'कुशिकतनूजन्मना' विश्वामित्रेण कथ्यमाना। तनौ जन्म यस्य स तनूजन्मा, कुशिकस्य तनूजन्मा कुशिकतनूजन्मा तेन। पुन किं कुर्वन्? 'प्रतिनदि' नदीं नदीं प्रति 'दग्धदुरितानि' ज्वलितपापानि अद्धि 'सानन्दचित्त' हृष्टहृदय सन् 'स्नान' मज्जन 'विदधत्' कुर्वन्। पुन किं कुर्वन्? 'पिकनिकरवती' कोकिलसमूहवती 'कान्तारपङ्क्ती' वनश्रेणी पश्यन् ॥ १६ ॥

*

यस्तीर्थानामुपास्त्या गलितमलभरं मन्यते स्म स्वमेवं,
नाज्ञासीज्जज्ञिरे यन्मम चरणरजःपातपूतान्यमूनि।
पादस्पर्शेन कुर्वन् झटिति विघटितग्रावभावामहल्यां,
कौशल्यासूनुरूनं व्यपनयतु स वः श्रेयसा च श्रिया च ॥ १७ ॥

[ हृदयरञ्जनी ]

यस्तीर्थानामिति। स कौशल्यासूनु व 'ऊन' अल्पत्व 'व्यपनयतु' दूरीकरोतु परिहरतु। केन? 'श्रेयसा' पुण्येन 'च' अपर 'श्रिया' लक्ष्म्या च। अयमर्थ —स रामो 'व' युष्माक 'श्रेयस' पुण्यस्य लक्ष्म्याश्च न्यून 'स्फेटयतु' पूर्णं करोतु। स क? यो राम तीर्थाना 'उपास्त्या' सेवया स्नानादिपरिचर्यया 'स्व' आत्मान 'गलितमलभर' गलित—गत मलभर—पापभरो यस्य त आत्मान मन्यते स्म। यो राम एव 'नाज्ञासीत्' नावबुद्धवान्। एवमिति किम्? यद् 'अमूनि' तीर्थानि जलानि 'मम चरणरज पातपूतानि जज्ञिरे' जातानीति, चरणयो रज चरणरज, तस्य पात—पतन तेन पूतानि—पवित्राणि तीर्थानि जातानीति। काकाक्षिगोलकन्यायेन तीर्थशब्द उभयतोऽपि योज्य, जलवाचित्वात् तीर्थवाचित्वात् तीर्थशब्दस्य। तदेतद्विशेषणेन चरणरजसो माहात्म्य प्रति-

१ °महिल्या भा० १–२ ॥

पादयन्नाह। यः किं कुर्वन्? 'झटिति' तत्क्षणमेव 'पादस्पर्शेन' चरणयो सम्पर्कमात्रेण 'अहल्यां' गौतमभार्यां 'विघटितग्रावभावां' विघटितः—विदलितः वियोजितः ग्रावभावः—पाषाणत्वं यस्याः सा तां कुर्वन्, राघवचरणरजःसम्पर्केण अहल्या शापप्राप्तपाषाणत्वं त्यक्त्वा पुनः स्वदेहं लब्धवतीति तात्पर्यार्थः। तथा चोक्तं **हनुमता**—

> क्षालयामि तव पादपङ्कजे, नाथ! दारुदृषदोः किमन्तरम्? ।
> मानुषीकरणचूर्णमस्ति ते, पादयोरिति कथा गरीयसी ॥१॥ [महानाटके ३.४५]

अनुमानालङ्कारः। तथा चोक्तम्—

> प्रत्यक्षालिङ्गतो यत्र कालत्रितयवर्तिनः ।
> लिङ्गिनो भवति ज्ञानमनुमानं तदुच्यते ॥ १ ॥
> [　　　　　　　　] ॥ १७ ॥

[ बालबोधिनी ]

यस्तीर्थेति। सः 'कौशल्यासूनुः' रामः 'वः' युष्माकं 'श्रेयसा' कल्याणेन 'श्रिया च' लक्ष्म्या च यद् 'ऊनं' न्यूनं तद् 'व्यपनयतु' निराकरोतु। स कः? 'यः' रामः तीर्थानां 'उपास्त्या' उपासनया 'स्वं' आत्मानं 'गलितमलभरं' गतपापभारं मन्यते स्म, परन्तु एव 'नाज्ञासीद्' न जज्ञे। एवं कथम्? यद् 'अमूनि' तीर्थानि मम 'चरणरजःपावनूतानि' पादरेणुस्पर्शनेन पवित्रितानि 'जज्ञिरे' बभूवुः। तत् कथम्? यस्मात् कारणात् 'पादस्पर्शेन' चरणालम्भनेन कृत्वा 'झटिति' शीघ्रं 'अहल्या' गौतमपत्नीं 'विघटितग्रावभावां' नाशितशिलाभावां कुर्वन् वर्तते ॥ १७ ॥

•

> **क्षिप्तः पातालमूले बलिरिह महता येन यस्माच्च भिन्न-**
> **ब्रह्माण्डान्मण्डयन्ती त्रयमपि जगतां निम्नगा निर्जगाम ।**
> **यश्चक्रे स्पर्शमात्रादपि दलितशिलाभावगल्यामहल्यां,**
> **कल्याणं लम्भयन् यः स घृणतु चरणः शार्ङ्गिणो राममूर्त्तेः। १८ ॥**

[हृदयहारिणी]

वर्द्धमानेन सता 'बलि' दानवेन्द्र 'पातालमूले' अधस्तात् 'क्षिप्त' [' प्र]वेशित प्रापित । 'च' अन्यद् 'यस्मात्' चरणात् 'निम्नगा' गङ्गा 'निर्जगाम, निर्ययो प्रादुर्बभूव। किम्भूतात् ' 'भिन्नब्रह्माण्डात्' भिन्न भेदित ब्रह्माण्ड–ब्रह्मकटाहो येन तस्मात्, ब्रह्मलोकमभिव्याप्तवत । किम्भूता निम्नगा ' जगता त्रयमपि 'मण्डयन्ती' भूषयन्ती, एकैव गङ्गा अलकनन्दा-सीता भागीरथीरूपेण भूत्वा त्रीन् लोकान् पुनातीत्यर्थ । 'च' अपर 'य' राम चरणस्पर्शमात्रादेव अहल्या ['दलितशिलाभावशल्या'] दलित शिलाभावशल्य यस्या सा ता 'चक्रे' विदधे इति स्पष्टम् ॥ १८॥

## [ बालबोधिनी ]

**क्षिप्त पातालेति**। स शार्ङ्गिण 'राममूर्त्ते' रामस्य 'चरण' पाद 'व' युष्मान् 'कल्याण' श्रेय 'लम्भयन्' प्रापयन् सन् 'पृणतु' रक्षतु। स कश्चरण ' येन महता चरणेन 'इह' भूतले 'बलि' असुर 'पाताळमूले' रसातले क्षिप्त । 'च' अपर यस्माद् 'भिन्नब्रह्माण्डाद्' भेदितब्रह्माण्डात् चरणात् 'जगता' लोकाना त्रयमपि 'मण्डयन्ती' अलङ्कुर्वती 'निम्नगा' गङ्गा 'निर्जगाम' निष्क्रान्ता। निम्न गमन यस्या सा निम्नगा। पुन स क ? 'य' चरण 'स्पर्शमात्रादपि' आलम्भमात्रेणापि अहल्या दलितशिला भावशल्या 'चक्रे' कृतवान्। दलित शिलाभावरूप शल्य यस्या सा दलितशिला भावशल्या ताम् ॥ १८ ॥

**य कृत्वा कौशिकोऽग्रे सममनुजनुषा पौरुषेणेव भाग्य,**
**भोग्यां पुण्यैरगण्यैः श्रियमिव मिथिलां प्राप पत्याऽर्थितोऽस्याः।**
**स श्रीकान्तावतारस्तरुणिमसमयारम्भशोभाभिरामो,**
**रामो वः कामितादप्यधिकमधिपतीभावमाविष्करोतु ॥ १९ ॥**

## [ हृदयरञ्जनी ]

**य कृत्वेति**। 'स' रामो वोऽधिपतीभाव 'आविष्करोतु' प्रकटयतु ददातु। किम्भूतम् ' 'कामितादप्यधिक' अभिलषितादपि प्रभूतम्। कोऽसौ राम ' 'श्रीकान्तावतार' श्री कान्ता यस्य, स वा श्रिय कान्त, तस्य अवतार –हरिरूपी। पुन किंलक्षण ? 'तरुणिमसमयारम्भशोभाभिराम' तरुणभाव तरुणिमा–तारुण्य तस्य समय–अवसर तस्याऽऽरम्भ–उद्गम तत्र या शोभा तज्जनिता वा शोभा–कान्ति तया अभिराम–सुन्दर'। स क ' कौशिक 'य' राम 'अग्रे' पुरस्तात् कृत्वा 'मिथिला' जनकनगरीं 'प्राप' गतवान्। किंलक्षणो मुनि 'अस्या' मिथिलाया 'पत्या' अधिपेन जनकेन 'अर्थित'

आह्वात । किम्भूत यम् ? 'अनुजनुषा' लक्ष्मणेन 'सम' भ्रातृयुक्तम् । केन युक्त कमिव ? पौरुषेणान्वित भाग्यमिव । कामिव मिथिला प्राप ? 'श्रियमिव' लक्ष्मीमिव । किम्भूता श्रियम् ? 'अगण्यै' अनेकै 'पुण्यै' सुकृतै भोग्याम्, मिथिलाऽपि एवंविधा भवति । यथा कश्चन राजा पौरुषेण युक्त भाग्य पुरो विधाय सुकृतभोग्या लक्ष्मी प्राप्नोति तद्वद् मुनिर्लक्ष्मणसहित राम पुरस्कृत्येत्यर्थ । उपमाऽलङ्कार । प्रसत्तिर्गुण । यथा—झटित्य र्थार्पक अय (? क्त्व यत्) प्रसत्ति सोच्यते यथा । अनुप्रास । वैदर्भी रीति । तथा—

अस्पष्टदोषमत्राभिसमयगुणगुम्फिता ।
विपञ्चीस्वरसौभाग्य वैदर्भी रीतिरिष्यते ॥ १ ॥

[ ]॥ १९ ॥

[ बालबोधिनी ]

**य कृत्वेति** । स 'राम' रामच द्र व ' युष्माक 'कापितात्' वाञ्छितादपि 'अधिक' बहु 'अधिपतीभाव' आधिपत्य 'आविष्करोतु' प्रकटीकरोतु । अनधिपतेरधिपतेर्भाव अधिपता भाव, त अधिपतीभावम् । किंलक्षण स ? 'आक्रान्तावतार' आदिपुरुषावतार । पुन किंलक्षण ? 'तरुणिमसमयारम्भशोभाभिराम' तारुण्यावस्थाप्रारम्भश्रिया मनोहर । स क ? 'कौशिक' विश्वामित्र 'अनुजनुषा सम' लक्ष्मणेन सह 'य' राम 'अग्रे कृत्वा' पुरस्कृत्य 'मिथिला' विदेहा 'प्राप' प्राप्तवान् । कन सह कमिव अग्रे कृत्वा कामिव ? श्रियमिव 'पौरुषेण' सम भाग्य अग्रे कृत्वा, यथा कश्चित् पुमान् 'भाग्य' प्राक्तन कर्म अग्र कृत्वा 'पौरुषेण' पुरुषार्थेन सम 'श्रिय' लक्ष्मीं प्राप्नोति । किंलक्षणा मिथिला श्रिय च ? 'अगण्यै' बहुभि पुण्यै 'भोग्या' भागार्हाम् । किंलक्षणो विश्वामित्र ? 'अरया' मिथिलाया 'पत्या जनकेन 'अर्चित' आचारित ॥ १९ ॥

*

**विश्वामित्र विदित्वा नगरपरिसरप्राप्तमाताय तस्मै,**
**सद्यः सम्पाद्य पाद्यप्रभृति च जनक साकमृत्विग्जनेन ।**
**भूयो भूयोऽपि यस्मिन् निजदृशमदिशद् विस्मयस्मेरतारां,**
**संसारान्तःप्रचार विरमयतु रमावल्लभः स प्रभुर्वः ॥ २० ॥**

[हृदयरञ्जनी]

**विश्वामित्रमिति** । स प्रभु 'संसारान्तःप्रचार विरमयतु' संसारस्य अन्त प्रचार-मध्यभ्रमण पुन पुन अवतरण शमयतु । किंलक्षण राम ? 'रमावल्लभ' लक्ष्मी कान्त । स क ? राजा जनक 'यस्मिन्' रामे 'भूयो भूय' पुन पुन 'निजदृश' स्वां दृष्टिं 'अदिशत्' आददौ निदधे । किंविधाम् ? 'विस्मयस्मेरतारां' विस्मयेन

स्मेरा–चपला तारा–कनीनिका यस्या सा ताम्, तदवलोकनेन चञ्चलो जात इत्यर्थः। किं कृत्वा? विश्वामित्रं मुनिं नगरपरिसर–नगरसमीपं प्राप्तं 'विदित्वा' ज्ञात्वा। 'च' अन्यद् 'आप्ताय' उपकारिणे 'तस्मै' विश्वामित्राय ऋत्विग्जनेन सह 'पाद्यप्रभृति' अर्हणां सपर्यां 'सम्पाद्य' कृत्वा ॥ २० ॥

[ बालबोधिनी ]

**विश्वामित्रं विदित्वेति।** स 'प्रभुः' रामः 'वः' युष्माकं 'संसारान्तःप्रचारं' संसारमध्ये गमनागमनं विरमयतु। किंलक्षणः? 'रमावल्लभः' रमा वल्लभा यस्यासौ रमावल्लभः, रमाया वल्लभो रमावल्लभ इति वा। स कः? 'जनकः' वैदेहः 'ऋत्विग्जनेन साकं' ऋत्विक्समूहेन सह विश्वामित्रं 'नगरपरिसरप्राप्तं' ग्रामनिकटवर्तिभूमिप्राप्तं 'विदित्वा' ज्ञात्वा तस्मै 'आप्ताय' हितकारिणे विश्वामित्राय 'सद्यः' तत्काल 'पाद्यप्रभृति' अर्चनं 'सम्पाद्य च' कृत्वा 'यस्मिन्' रामे 'भूयो भूयोऽपि' पुनः पुनरपि 'निजदृशं' स्वकीयां दृष्टिं 'अदिशद्' आरोपितवान्। किंलक्षणां निजदृशम्? 'विस्मयस्मेरतारां' आश्चर्येण ईषद्धास्ययुक्तकनीनिकाम् ॥ २० ॥

*

'अप्रज्ञातेऽपि सम्यक् क्रतुपुरुषतया ज्ञायमाने जनानां,
धाम्ना स्वेनार्हणीये हरिणशिशुदृशां दर्शनीये श्रिया च।
राजा सूर्यप्रशिष्यः किमपि किल विदन्नाऽऽदधेऽसौ विशिष्टां,
दृष्टिं यस्मिन्ननिष्टं स दहतु सहसा सैंहिकेयासुहृद् वः ॥ २१ ॥

[ हृदयरञ्जनी ]

**अप्रज्ञातेऽपीति।** स 'सैंहिकेयासुहृत्' राहुप्राणहारी स कृष्णावतारो रामः 'सहसा' झटिति 'वः' युष्माकं ['अनिष्टं'] अकल्याणं 'दहतु' भस्मीकरोतु। सिंहिकाया अपत्यं सैंहिकेयः 'स्त्रीभ्यो ढक्' [पाणि० ४।१।१२०] इति ढक्। स कः? 'किल' इति सत्ये आदरे वा। 'असौ' जनको राजा 'यस्मिन्' रामे 'विशिष्टां' विशेषेण सादरां 'दृष्टिं' दृशं 'किमपि विदन् सन्' किमप्येतदपूर्वदर्शनमिति जानन् 'आदधे' निदधे, राममादरपूर्वकं ददर्शेत्यर्थः। किंलक्षणो राजा? 'सूर्यप्रशिष्यः' सूर्यस्य शिष्यो याज्ञवल्क्यः तस्य शिष्यो जनक इति कृत्वा सूर्यस्य प्रशिष्यः–शिष्यस्य शिष्यः। क्व सति? 'क्रतुपुरुषतया' अयं यज्ञेश्वर इति ['सम्यग्'] विशेषतया 'अप्रज्ञातेऽपि' अज्ञातेऽपि। पुनः क्व सति? 'स्वेन धाम्ना' स्वतेजसा 'जनानां' लोकानां 'अर्हणीये' पूज्ये 'ज्ञायमाने

1 अप्रज्ञाते च सम्यक् भा ३–४।

सति' लोके कोऽ[प्य]ऽयमतितेजस्वी महापुरुष इति ज्ञाते सतीति। पुन क सति ? 'श्रिया' शोभया 'हरिणशिशुदृशा' मृगशावलोचनानां स्त्रीणां दर्शनीये जायमाने सति। हरिणस्य शिशु हरिणशिशु तस्य दृशाविव दृशो यासां तास्तासां द्रष्टु योग्य दर्शनीय तस्मिन्, कामिनीभि 'साक्षात् काम एवायम्' इति दृष्ट इति व्यङ्ग्यम्। अद्भुत शृङ्गारयोरलङ्कार भावोदय, प्रसत्तिर्गुण वैदर्भी रीति ॥ २१ ॥

[बालबोधिनी]

अप्रज्ञातेऽपीति। स 'मैंहिरेयासुहृद्' राहुवैरी राम 'व' युष्माक 'अनिष्ट' दुरित 'सहसा' अकस्मादविचार्य 'दहतु' भस्मीकरोतु स। क ? असौ 'सूर्यप्रशिष्य' याज्ञवल्क्यशिष्य 'राजा' जनक 'किल' इति सम्भावनायाम् 'किमपि किञ्चिद् विदन् सन्' 'यस्मिन्' रामे 'विशिष्टा विशयुक्ता 'दृष्टि' चक्षु, अत्राप्यर्थे राजा तु सूर्यप्रशिष्य, रामश्च सूर्यवंशोद्भव, तेन किमपि विदन् 'आदधे' आरोपितवान्। किंलक्षणे रामे ? सम्यग् अप्रज्ञातेऽपि। पुन किंलक्षणे रामे ? विश्वामित्रोपदेशात् 'क्रतुपुरुषतया' यज्ञपुरुषत्वेन ज्ञायमाने। पुन किंलक्षणे ? 'जनानां' पुरुषाणां मध्ये 'स्वेन धाम्ना' आत्मतेजसा 'अर्हणीये' पूजनीये। पुन किंलक्षणे ? 'च अपर 'श्रिया' स्वशरीरशोभया कृत्वा हरिणशिशुदृशां 'दर्शनीये' द्रष्टु योग्य। हरिणानां–मृगाणां शिशव –बाला हरिणशिशव, हरिणशिशूनां दृश इव दृश –चक्षूंषि यासां ता हरिणशिशुदृश, तासां हरिणशिशुदृशाम्। २१ ॥

सम्भूतं भानुवंशे दशरथपितृकं 'रामभद्राभिधानं,
क्रव्यादक्षोददक्षं 'यमवगतवता गाधिपुत्रोपदेशात्।
राज्ञा पुत्रीप्रदानप्रगुणितमनसाऽनङ्गजिच्चापभङ्ग-
प्रत्यूहार्त्तेन जातं प्रतिहतविपदं सम्पदं वः स दिश्यात्॥ २२ ॥

[हृदयरञ्जनी]

सम्भूतं भानुवंशे इति। 'स' राम 'व' युष्माक सम्पद 'दिश्यात्' देयात्। किम्भूता सम्पदम्? 'प्रतिहतविपद' प्रतिहता–निवारिता विपत्–आपद् यस्या सा ता अविनाशिनीम्। 'राज्ञा' जनकेन 'अनङ्गजिच्चापभङ्गप्रत्यूहार्त्तेन जात' यमुद्दे, अनङ्ग निवारन् अनङ्गजित् श्रीमहादेव तस्य चाप धनु तस्य भङ्ग स एव प्रत्यूह विघ्नोऽन्तराय स एव आर्त्ति–पीडा तेन पीडितेन दु खितेन यमुद्दे। किम्भूतेन ? 'गाधिपुत्रोपदेशात्' विश्वामित्रवचनाद् 'य' राम वक्ष्यमाणगुणोपेत 'अवगतवता' जानता

१ रामराजाभि' भा २॥ २ यमधिगत' भा १॥

सता । पुन किंलक्षणेन राज्ञा ? 'पुत्रीप्रदानप्रगुणितमनसा' पुत्र्याः–सीताया प्रदानं पुत्रीप्रदान तत्र प्रगुणित–प्रह्वीभूत अनुकूलित मनो यस्य तेन, यदि कन्याप्रदाने धनुर्भङ्गः पणो न कृतो भवेत् तदा तस्मै रामायेयं सीता दत्ता स्यादिति मन पीडया पीडितमिति भाव । किम्भूतं रामम् ? 'भानुवंशे सम्भूतं' सूर्यवंशे जातम् । तथा 'दशरथपितृकं' दशरथ पिता यस्य स तं दशरथपितृकम् । तथा 'रामभद्राभिधानं' रामभद्र इत्यभिधान–नाम यस्य स त रामभद्राभिधानम् । तथा 'क्रव्यादक्षोददक्ष' क्रव्य–मांस अदन्ति क्रव्यादा – राक्षसाः तेषा क्षोद –हिंसन तत्र दक्ष –पण्डित चतुर तम् । एवं सकलगुणगणोपेत रामं दृष्ट्वा रामसाध्य पणोऽयमिति मत्वा दु खितोऽभूदित्यर्थ । गौडीया रीति, ओजो गुण, ग्लानिचिन्तयोर्गर्वयो सन्धि । शब्दा समासवन्तो भवन्ति यथाशक्ति गौडीया ॥ २२ ॥

[बालबोधिनी]

**सम्भूतं भानुवंशे** इति । स राम 'व·' युष्माक 'प्रतिहतविपद ' निराकृतापदं 'सम्पदं' समृद्धिं 'दिश्यात्' दिशतु । कथ सम्यग्ज्ञात ? इत्यत आह–स क· ? 'य' राम 'गाधिपुत्रोपदेशाद्' विश्वामित्रकथनाद् 'अवगतवृत्ता' ज्ञातवृत्ता 'राज्ञा' जनकेन 'पुत्रीप्रदानप्रगुणितमनसा सीतासम्प्रदाने सज्जीभूतचित्तेन 'जात' अभाति । किंलक्षण रामम् ? 'भानुवंशे' सूर्यवंशे 'सम्भूत, उत्पन्नम् । पुन किंलक्षणम् ? दशरथपितृक' दशरथ पिता यस्यासौ दशरथपितृक, त दशरथपितृकम् । पुन किंलक्षणम् ? 'रामभद्राभिधान' रामभद्र· अभिधान–नाम यस्यासौ रामभद्राभिधान·, त रामभद्राभिधानम् । पुन· किंलक्षणम् ? 'क्रव्यादक्षोददक्ष' क्रव्य–अपक्व मांस अदन्तीति क्रव्यादा –असुरा, तेषा क्षोद –चूर्णीकरण तस्मिन् दक्ष·–चतुर·, त क्रव्यादक्षोददक्षम् ? । किंलक्षणन राज्ञा ? अनङ्गजिच्चापभङ्गप्रत्यूहार्त्तेन' अनङ्ग जयतीत्यनङ्गजिद्–महादेव, तस्य चाप अनङ्गजिच्चापम्, तस्य भङ्ग स एव प्रत्यूह –अन्तराय तेन आर्त्त –पीडित सन् ॥ २२ ॥

*

**आदेशात् कौशिकस्य स्मरमथनधनुः स्थापितं मैथिलेन,**
**क्षोणीन्द्रेणाऽऽत्मपुत्रीपरिणयनपणं तत्क्षणादेव वीक्ष्य ।**
**तस्मिन् भङ्गाभियोगं भुजग इव सुधाकुम्भलाभान्तराये,**
**यः प्रारेभे तरस्वी वितरतु विभवं[1] स प्रभूतं प्रभुर्वः ॥ २३ ॥**

[हृदयरञ्जनी]

**आदेशात् कौशिकस्येति** । स प्रभु 'वः' युष्माकं प्रभूत 'विभव' ऐश्वर्य 'वितरतु' ददातु । किंलक्षण ? 'तरस्वी' बलवान् । स क ? 'य' रामः 'तस्मिन्'

1 विभव वैनतेयध्वजो व भा० १ ॥

स्मरमथनधनुषि 'भङ्गाभियोग' भङ्गस्याभियोग –उद्यम त भङ्गाभियोग 'प्रारेभे' उपचक्रमे। किं कृत्वा ? 'स्मरमथनधनुर्वीक्ष्य' ईशधनु चाप 'वीक्ष्य' दृष्ट्वा। किम्भूत धनु ? 'कौशिकस्यादेशाद्' विश्वमित्राज्ञया 'मैथिलेन' जनकेन 'क्षोणीन्द्रेण' राज्ञा पुरस्तात् स्थापितम्। किम्भूत धनु ? 'आत्मपुत्रीपरिणयनपण' आत्मन –स्वस्य पुत्री–सीता तस्या परिणयन–विवाह तदेव पण –शुल्क यस्य तत्, य इद धनुर्नम्रीकरिष्यत्येना परिणेष्य तीति पणो यत्र, तद् धनुर्वीक्ष्य तत्क्षणादेतद्भङ्गे प्रवृत्ते इत्यर्थ। क इव ? यथा पूर्वं 'भुजग' सर्पाधीश्वर 'सुधाकुम्भलाभान्तराये' अमृतकुम्भप्राप्तिविघ्ने भङ्गे प्रारम्भ चक्रे तद्वदित्यर्थ। तरस्वीति साभिप्राय विशेषणम्, ओत्सुक्यभावस्योदय। श्लेषालङ्कार। मधुरो गुण। वैदर्भीरीति ॥ २३ ॥

## [ बालबोधिनी ]

आदेशादिति। स 'प्रभु' राम 'व' युष्माक 'प्रभूत' समृद्ध विभव 'वितरतु' ददातु। स क ? य 'तरस्वी' बलवान् राम 'कौशिकस्य' विश्वामित्रस्य 'आदेशाद्' आज्ञात 'मैथिलेन' जनकेन 'क्षोणीन्द्रेण' राज्ञा 'स्थापित' आरोपित 'स्मरमथनधनु' महारुद्रस्य चाप तत्क्षणादेव 'वीक्ष्य' दृष्ट्वा 'तस्मिन्' धनुषि 'भङ्गाभियोग' भङ्गाभ्यास 'प्रारेभे' प्रारब्धवान्। किं लक्षण धनु ? मैथिलस्य 'आत्मपुत्रीपरिणयनपण' सीताविवाह कारणम्। किं लक्षणे धनुषि ? उत्प्रेक्ष्यते–'सुधाकुम्भलाभान्तराये भुजग इव' अमृतघटप्राप्ते अन्तरायभूते सर्पे इव ॥ २३ ॥

*

**वैदेहे सन्दिहाने जपति मुनिजने सिद्धिदान् वेदमन्त्रान्,**
**सीतायां च स्मरन्त्यामचलदुहितर ताम्यति ज्ञातिवर्गे।**
**आदायाऽऽकृष्य भङ्क्त्वा त्रिपुररिपुधनुर्यो न किञ्चिद् विचक्रे,**
**चक्री स प्रीतये वो भवतु कृतदिनाधीशवंशावतारः ॥ २४ ॥**

## [ हृदयरञ्जनी ]

**वैदेहे सन्दिहाने इति।** कृतदिनाधीशवंशावतार चक्री 'स' राम 'व प्रीतये' 'व' युष्माक मुदे भवतु। 'चक्री' चक्रमस्यास्तीति चक्री–चक्रपाणि। स क ? यो 'न किञ्चिद् विचक्रे' विक्रियां न प्राप, विस्मय न ययौ। किं कृत्वा ? 'त्रिपुररिपुधनु' त्रिपुराणां रिपु –श्रीमहादेव तस्य धनु –चाप 'आदाय' गृहीत्वा च आकृष्य तद् धनु

१ विस्मापयनु पु० ॥

भङ्क्त्वाऽपि । क सति ? 'वैदेहे सन्दिहाने सति' जनके संशयं कुर्वेति सति । तथा मुनिजने 'सिद्धिदान्' सिद्धिप्रदान् समर्थान् वेदमन्त्रान् 'जपति सति' पठति सति स्मरति सति । तथा सीतायां जानक्या च 'अचलदुहितर' गौरीं 'स्मरन्त्या ध्यायमानायाम् । तथा 'ज्ञातिवर्गे ताम्यति सति' बन्धुवर्गे ग्लायमाने सति । एवं सति स राम झटिति धनुरादाय आकृष्य बभञ्जेत्यर्थ । सौकुमार्योऽयं गुण, "अनिष्ठुराक्षरत्व यत् सौकुमार्यमुदाहृतम् ।" विशेषोक्तिरलङ्कार । कारणसामग्र्या सत्या कार्योत्पत्तिरिति विशेषो लाक्षि(लक्ष)णम् । तत्र धनुर्भङ्ग लक्षणगर्भकारणसामग्री वर्त्तते, स्मयलक्षण कार्यं रामेणोत्पद्यतामिति ॥ २४ ॥

## [ बालबोधिनी ]

वैदेहे इति । सः 'चक्री' राम 'व' युष्माक 'प्रीतये' प्रीत्यै 'भवतु' अस्तु । किं लक्षण ? 'कृतदिनाधीशवशावतार' दिनस्य-अह्न अधीश दिनाधीश-सूर्यः तस्य वश, कृत दिनाधीशवशे अवतारो येनासौ कृतदिनाधीशवशावतार । स क ? 'य' रामः 'त्रिपुररिपुधनु' महादेवचाप 'आदाय' गृहीत्वा 'आकृष्य' ज्याधिरूढ कृत्वा 'भङ्क्त्वा' चूर्णीकृत्य च 'किञ्चित्' किमपि 'न विचक्रे' विकार न प्राप्त । क सति ? 'वैदेहे' जनके 'सन्दिहाने' सन्देह प्राप्नुवति । पुन क सति ? 'मुनिजने' ऋषिसमूहे सिद्धिदान् वेदमन्त्रान् जपति सति । पुन क सति ? सीतायां 'अचलदुहितर' पार्वतीं स्मरत्या च सत्याम् । पुन क सति ? 'ज्ञातिवर्गे' बन्धुजने 'ताम्यति' ग्लानिं प्राप्नुवति सति ॥ २४ ॥

*

**येनाधिज्यं धनुस्तन्मदनदमयितुर्लीलया भज्यमानं,**
**शब्देनाऽऽह्वानमुच्चैः किल परुपरुषो रैणुकेयस्य चक्रे ।**
**मन्दाक्षान्मन्दमक्षि प्रणयपरिचयाल्लोलमप्राप्तिभीते-**
**र्भीरु व्यापारयन्त्या जनकतनुजया वीक्षितः सोऽवताद् वः ॥२५॥**

## [ हृदयरञ्जनी ]

येनाधिज्यमिति । 'स' रामो 'व' युष्मान् 'अवतात्' रक्षतात् । किंलक्षणो राम ? जनकतनुजया 'विक्षित' दृष्ट । किंलक्षणया ? 'अक्षि व्यापारयन्त्या' लोचन प्रेरयन्त्या । किंलक्षण चक्षु ? कथ यथा भवति ? 'मन्दाक्षाद्' लज्जातो मन्द यथा स्यात्तथा । [पुन] किम्भूतं चक्षु ? 'प्रणयपरिचयाल्लोल' प्रणयस्य-स्नेहस्य प्रथमपरिचय-सम्बन्ध तस्माल्लोलम्, प्रथमपरिचये सर्वोऽपि लोलो भवति । पुन किंलक्षणम् ? 'अप्राप्तिभीतेर्भीरु'

---

१ भजति सति पु० ॥  २ पितृव्यजने 'ताम्यती' लाभं के ॥  ३ प्राप्यमाणे सति पु० ॥
४ °तनयया भा० ३-४ ॥ एतत्पाठानुसारेण बालबोधिन्यां व्याख्या वर्तते ॥

भयात्मकम्, अप्राप्ते भीति — भय तस्माद् विह्वलाम्। स इति क ? 'येन' रामेण 'लीलया' हेलया 'भज्यमान' द्विधाभवद् ['मदनदमयितु धनु '] मदनमथनधनुरुच्चै शब्देन 'रैणुकेयस्य' रेणुकाया अपत्य रैणुकेय तस्य परशुरामस्य 'आह्वान' आकारण चक्रे अकृत इव अभावे लुप्तोत्प्रेक्षा वा। किल्शब्द उत्प्रेक्षायाम्। किम्भूतस्य? 'परुषस्य' परुषा-निर्दया रुट्-कोपो यस्य तस्य। अयमर्थ —हे रैणुकेय! शीघ्रमेहि त्वम्, त्वद्गुरो महादेवस्य धनुरनेनाभाजि इति आह्वान विदधदिव चक्रे, कर्तरि लिट्। किंलक्षणम्? 'अधिज्य' अधिरूढा ज्या यस्य तत्, अर्थान्तरन्यासश्च—य किल केनापि ताड्यमान सन् स्वपक्षपातिने स्वामिने वा कथयन् उच्चैरारटते। उत्तरार्द्धे उत्कण्ठालक्षणो विप्रलम्भ शृङ्गार। चपलनात्रासमयोर्भावयो सन्धि भावोदयोऽलङ्कारश्च ॥ २५ ॥

[ बालबोधिनी ]

येनाधिज्यमिति। 'स' राम 'व' युष्मान् 'अवताद्' रक्षतु। किंलक्षण? 'जनकतनयया' सीतया 'वीक्षित' दृष्ट। किंलक्षणया जनकतनयया? 'अक्षि' चक्षु 'स्वाधारय ला आ दोल्य या। किंलक्षण अक्षि? म दाभाद् 'म द' अतिनिश्चलम्। पुन किंलक्षणम्? 'प्रणयपरिचयाद्' अनङ्गजप्रत्यभ्यासाद् 'लोल' चपलम्। पुन किंलक्षणम्? 'अप्राप्तिभीति' रामस्याप्राप्तिभयाद् 'भीरु' भययुक्तम्। स क? 'येन' रामेण तद् 'मदनदमयितु' महादेवस्य अधिज्य' ज्याविरूढ 'धनु' चाप 'लीलया' अक्लेशेन 'भज्यमान' द्वेधा क्रियमाण सद् 'उच्च' महता शब्देन 'किल' सम्भावनायां 'रैणुकेयस्य' परशुरामस्य 'आह्वान' आकारण चक्र। किंलक्षणस्य रैणुकेयस्य? 'परुष रुष' कठोरस्य ॥ २५ ॥

•

तत्कालोत्तालनेत्रानलतरलशिखाङ्गारितानङ्गमूर्त्ते-
 र्देवस्यावेक्ष्य चाप सपदि विदलित मोदमानो मनोभू:
सीतासङ्ग स्वकीय गुणवदिव धनु: प्राविभर्त्ति स्म यस्मै,
 प्रेम क्षेमान्वितं च किसलयतु जयश्रीललामं स राम: ॥ २६ ॥

---

१ [illegible] ॥
२ [illegible]
[illegible]
[illegible] ।
[illegible]
[illegible] ॥
[illegible] ।

[ हृदयरञ्जनी ]

**तत्कालोत्तालेति** । स रामो 'व ' युष्माक क्षेमान्वित 'हेम' सुवर्ण 'किसलयतु' पल्लवयतु वर्द्धयतु । किंलक्षणम् ? 'जयश्रीलग्नग' जयलक्ष्मीरेव लग्नग-रत्न यस्य तत् । [किंलक्षणो राम ? 'यस्मै' रामाय 'मनोभू ' मदन ] सीतासज्ञ स्वकीय द्वितीय वा धनु 'प्रातिभर्चि स' दधे । किम्भूत धनु ? 'गुणवत्' गुण —ज्याऽस्यास्तीति गुणवत् सगुणम्, सीताऽपि गुणवती । किंलक्षणो मदन 'मोदमान ' हृष्यन् । मोदे कि कारण ? सपदि 'दैवस्य' शम्भो 'चाप' धनु दलित [ 'अवेक्ष्य' ] दृष्ट्वा आलोक्य । किंलक्षणस्य शम्भो ? 'तत्कालोत्तालनेत्रानलतरलशिखाङ्गारितानङ्गमूर्त्ते' तत्काल—स चासौ कालश्च तत्काल तस्मिन् उत्ताल—उद्र्ध्वीभूतश्चासौ नेत्रानलश्च—लोचनवह्नि तस्य तरला चासौ या शिखा च—ज्वाला तया अङ्गारिता—अङ्गारमिता प्रापिता सञ्जाता वा अनङ्गमूर्ति—काम-शरीर येन स तस्य, [ "तदस्य सजात] तारकादिभ्य इतच्" [पाणि० ५ २ ३६] । अयमभिप्राय —स्वशत्रुभूतस्य देवस्य धनुर्दलित दृष्ट्वा तत्क्षणमेव मोदमानो [मनोभू ] रामाय उपकारिणे सीतालक्षण गुणवद् धनुर्ददावित्यर्थ, लोके यथा कश्चन यस्मात् स्वशत्रु-तिरस्कार पश्यति स्वय मोदमानस्तस्मै उपकरोतीति ध्वनि, अर्थान्तरन्यासश्च, असङ्गतिर-लङ्कारश्च । यथा धनुर्भङ्गलक्षण कारण रामे तज्जनितहर्षलक्षण कार्य मदने दृश्यते इति । लक्षण च—

यत्र कारणमन्यत्र कार्यमन्यत्र ज्ञायते ।
असङ्गश्चा( त्य )भिधान( न ) तमलङ्कार विदुर्बुधा ॥ १ ॥ इति ।

वैदर्भीगौडीययो साङ्कर्यम् । आरभटीवृत्ति, वीररसास्वादनमूलकत्वात् शृङ्गारो त्रि(रक्ति)गुणी भूत, रूप नेत्रयो सन्धि ॥ २६ ॥

[ बालबोधिनी ]

**यं सव्रीडा सनीडावसथपथगतं वीक्षमाणा गवाक्षाद्,**
**'यन्नामाख्यानकेलिं कलयति च किल स्त्रीजने जातमन्युः।**
**यत्सम्बन्धोत्कबुद्धिः समयमगमयन्मैथिली तं कथञ्चित्,**
**सानाथ्यं स क्रियाद् वः क्शितशितगलोद्दण्डकोदण्डधामा ॥२७॥**

[ हृदयरञ्जनी ]

**यं सव्रीडेति।** 'स' रामो 'व' युष्माकं 'सानाथ्यं' सनाथस्य भावं सानाथ्य-सस्वामित्वं 'क्रियाद्' विदध्यात्। किम्भूतः सः ? 'क्शितशितगलोद्दण्डकोदण्डधामा' शित–मेचक[ वर्णं ]गल–कण्ठो यस्य स शितगलः–महादेवस्तस्य उद्दण्ड–प्रचण्डश्चासौ कोदण्ड–स्वचापः तस्य धाम–तेजः, क्शितं–नाशितं शितगलोद्दण्डकोदण्डधाम येन स क्शितशितगलोद्दण्डकोदण्डधामा। सः कः ? 'मैथिली' सीता 'यत्सम्बन्धोत्कबुद्धिः सती' यस्य रामस्य सम्बन्धः–पाणिग्रहणलक्षणः तत्र उत्का–सोत्कण्ठा बुद्धिः–मतिः यस्याः सा। सीता 'कथञ्चित्' महता कष्टेन 'तं समयं' तत्प्राप्तिसमयं 'अगमयद्' गमयति स्म अति-वाहयाञ्चक्रे। किंलक्षणा सीता ? सव्रीडा सती 'गवाक्षाद्' गवाक्षे स्थित्वा रामं 'वीक्षमाणा' पश्यन्ती, ल्यब्लोपे पञ्चमी। किंलक्षणं रामम् ? 'सनीडावसथ(पथ)गतं' नीडेन सह वर्त्तमानानि सनीडानि सन्निकटानि यानि आवसथानि–गृहाणि तेषां पन्थाः—मार्गस्तं गतं–प्राप्तम्, राज-मार्गं गच्छन्तं यज्ञमण्डपप्रदेशाद् राजगृहं प्रत्यागच्छन्तमित्यर्थः। पुनः किम्भूता ? 'जातमन्युः किल' इति अलीकस्कृतकोपा। क सति ? 'स्त्रीजने' स्त्रीलोके 'यन्नामाख्यानकेलिं' यस्य–रामस्य नाम्नः [आख्यान–ग्रहणं तद्विषया] केलिं–क्रीडा वा यन्न(ना)म्ना विनोदं 'कलयति सति' 'रामोऽयमायातः, त्वं परिणेष्यसि' इत्यादि वारं वारं नाम गृहीत्वा विनोदमुपहासं कुर्वति सति मिथ्यासञ्जातकोपेत्यर्थः। अनुप्रासः शब्दालङ्कारः। उत्कण्ठा ईर्ष्या चात्र विप्रलम्भशृङ्गारः। व्रीडाऽसूयाचपलतानां भावानां सन्धिः। माधुर्यो गुणः। "सरसार्थपदत्वं यत् तन्माधुर्यमुदाहृतम्" ॥ २७॥

[ बालबोधिनी ]

*यं सव्रीडेति। 'स' राम 'व' युष्माकं 'सानाथ्यं' स्वामित्वं 'क्रियाद्' करोतु।* किंलक्षणः ? 'क्शितशितिग(ग)लोद्दण्डकोदण्डधामा' क्शितं महादेवस्य महतो धनुषस्तेजो येन स क्शितशितिग(ग)लोद्दण्डकोदण्डधामा। सः कः ? यत्सम्बन्धोत्कबुद्धिः' यस्य–रामस्य सम्बन्धे उत्कण्ठितमतिः सती मैथिली' सीता 'कथञ्चिद्' महता कष्टेन तं समयं तं कालं 'अगमयद्' अक्षिपत्। सा कः ? किंलक्षणा सा ? 'गवाक्षाद्' उच्चापरशनप्रदेशाद्विशेषाद्

१ यन्नामग्राहकेलिं भा० १ ४। एतत्पाठानुसारेण बालबोधिन्यां व्याख्या वर्तते ॥

'सव्रीडा' सलज्जा सती 'यं' राम 'वीक्षमाणा' पश्यन्ती वर्त्तते। किंलक्षणं रामम्? 'सव्रीडारसपथगत' समीपगृहमार्गे गतागत कुर्वाणम्। पुन स क? किंलक्षणा च सा? 'च' पर 'यन्नामग्रहकेलिं कलयति' यस्य-रामस्य नाम गृहीत्वा गृहीत्वा क्रीडा विदधाति 'स्त्रीजने' सखि(खी)समूहे 'किल' इति मिथ्या 'जातमन्यु' कृतकोपा वर्त्तते ॥ २७ ॥

*

आहूताऽऽयातजन्यक्षितिपकरिघटासङ्कटोद्यानदेशं,
वैदेहाऽऽदेशबद्धप्रतिगृहसुबृहत्तोरणस्रक्सहस्रम्।
आनन्दस्फीतगीताकुलकुलवनिताभूषणोद्भूतकान्ति,
प्रक्रान्ते यद्विवाहे तिमिनगरमभूदस्तु स श्रेयसे वः ॥ २८ ॥

[ हृदयरञ्जनी ]

आहूतायातेति। 'स' राम 'व' युष्माकं 'श्रेयसे' कल्याणाय 'अस्तु' भवतु, श्रेयस्कारी भूयादिति सम्बन्ध। स क? 'यद्विवाहे' यस्य-रामस्य विवाहे-पाणिग्रहणे 'प्रक्रान्ते' उपक्रान्ते सति 'तिमिनगर' कर्तृ मिथिलानगरी एवंविधगुणविशिष्टमभूत्। किम्भूत तिमिनगरम्? 'आहूतेति०' आहूताश्च ते आयाताश्च, जन्याश्च क्षितिपाश्च जन्यक्षितिपा, आहूतायाताश्च ते जन्यक्षितिपाश्च तेषा करिघटा-गजसमूहा ताभि सङ्कट-सम्बन्धः सम्मर्द उद्यानदेशो यस्य तत्, आहूताऽऽकारिताऽऽगतमनुष्यलोकनृपतिगजसमूहनिरुद्धोद्यानप्रदेशम्। पुन किम्भूतम्? 'वैदेहेति०' वैदेहस्य-जनकस्य आदेश वैदेहादेशस्तस्माद् बद्ध प्रतिगृह सुबृहत्तोरणाना-आम्रपल्लवाना स्रक्सहस्रं-मालासहस्रं-यस्मिन्। तेन अपरं किम्भूतम्? आनन्देन-हर्षेण स्फीतानि-मनोहराणि च तानि गीतानि च तेष्वाकुला-गाननपरा या कुलवनिताः सुवासिन्य तासां भूषणानि ता एव भूषणानि तैरुद्भूता-उद्गता कान्ति-शोभा यस्य तत्। छेकानुप्रास, आरभटी वृत्ति, गौडीया रीति, ओजो गुण, वास्तवालङ्कार स्वभावोक्ति, लोके विवाहे क्रियमाणे राज्ञा नगरे उत्साह कार्यत इति ॥ २८ ॥

[ बालबोधिनी ]

आहूतायातेति। 'स' राम 'व' युष्माक श्रेयसेऽस्तु। स क? 'यद्विवाहे' यस्य-रामस्य विवाहे 'प्रक्रान्ते' वर्त्तमाने 'तिमिनगर' वैदेहपुर ईदृश 'अभूद्' जातम्। कीदृशम्? 'आहूतायातजन्यक्षितिपकरिघटासङ्कटोद्यानदेश' पूर्वं आहूता-आकारिता, सन्त आयाता-आगता ये जन्या राजानश्च तेषां हस्तिसमूहे सङ्कट वाटिकाप्रदेशो यस्मिन् तत्।

१ सङ्कुलोद्यान° भा० १। सङ्कटोद्यान° भा० १-१-४॥

पुन कीदृक्? 'वैदेहाऽऽदेशबद्धप्रतिगृहसुबृहत्तोरणस्रक्सहस्र' जनकस्याऽऽज्ञया बद्धानि गृह गृह प्रति महान्ति तोरणाना मालाना च सहस्राणि यस्मिन् तत्। पुन कीदृशम्? 'आनन्दस्फीतगीताकुलकुलवनिताभूषणाद्भूतकान्ति' हर्षेण प्रवृद्धानि तानि च गानानि तै आकुला—व्यग्रा या कुलवृद्धा स्त्रियः तासामाभरणै उत्पन्नकान्ति ॥ २८॥

*

लक्ष्मीमिक्ष्वाकुराजः स च धरणिसुता सा च देयादमेयां,
युष्मभ्यं येन यस्याः करसरसिरुहं ग्राहयित्वा महर्षिः।
ऐक्यं किञ्चित् तथाऽसौ व्यधित किल यथाऽन्योन्यमन्तर्गतस्य,
द्वन्द्वस्योद्दामदैवव्यवहितवपुषोऽप्यस्य नाऽऽसीत् पृथक्त्वम् ॥ २९॥

[ हृदयरञ्जनी ]

**लक्ष्मीमिक्ष्वाकुराज इति।** 'स इक्ष्वाकुराज' रामश्च [सा च] 'धरणिसुता' वैदेही च 'युष्मभ्य' भवद्भ्य 'अमेया' अपरिमितपुष्कला 'लक्ष्मीं' श्रिय 'देयात्' दद्यात्, प्रार्थनाया लिङ्। स क? 'महर्षि' विश्वामित्र 'येन' रामेण 'यस्या' सीताया 'करसरसिरुह' करकमल 'ग्राहयित्वा' चारयित्वा 'तथा' तेन प्रकारेण 'किञ्चिद्' अनिर्वचनीय निर्वक्तुमशक्य [ऐक्य] 'व्यधित' कृतवान् यथाऽस्य 'द्वन्द्वस्य' मिथुनस्य 'अन्योन्य' परस्पर 'अन्तर्गतस्य' चित्तस्य पृथक्त्व 'नाऽऽसीद्' नाभूत्, उभयोश्चित्तमैक्यमभजदित्यर्थ। किंलक्षणस्य? 'उद्दामदैवव्यवहितवपुषोऽपि' उद्दाम—उत्कट यद्दैव—भागधेय तेन व्यवहित—व्यवधानीकृतं वपु—देहो यस्य स तस्यापि, यद्यप्युभौ स्वशरीरसौभाग्यमदेन मदवन्तौ तथापि रूपादिमात्सर्यपरित्यागेनैकचित्तावभूतामित्यर्थ, अथवा शरीरेण पृथग्भूतौ न चित्तत इति। अनुप्रास। रस शृङ्गारो नुराख्य भावोदयोऽलङ्कार ॥ २९॥

[ बालबोधिनी ]

लक्ष्मीति। स 'इक्ष्वाकुराज' राम सा च 'धरणिसुता' सीता च 'युष्मभ्य' भवद्भ्य 'अमेया अपरिमिता 'लक्ष्मीं' श्रिय 'देयाद्' ददातु। स क? सा च का? 'येन' रामेणासौ 'महर्षि' वसिष्ठ 'यस्या' सीताया 'करसरसिरुह' हस्तकमल 'ग्राहयित्वा' पाणिग्रहण कारयित्वा किञ्चित् तथा 'ऐक्य' एकत्र 'व्यधित' कृतवान् यथा अस्य 'अन्तर्गतस्य' मध्यवर्तिन 'द्वन्द्वस्य' हिरण्मयशरीरद्वयस्य 'उद्दामदैवव्यवहितवपुषोऽपि' उत्कृष्टप्राक्तने कर्मभि अन्तर्हितशरीरस्यापि 'किल' इति सत्ये 'अन्योन्य' परस्पर 'पृथक्त्व' 'नाऽऽसीद्' न बभूव ॥ २९॥

---

*पुषो यस्य भा० ३-४ ॥

सानन्दं गीयमानः कुलयुवतिजनैर्बन्दिभिः स्तूयमानो,
लोकैरालोक्यमानश्चिरमवतु स वस्ताडकारिस्तदानीम् ।
देव्याः क्षोणिप्रसूतेस्त्रिभुवनविदितं येन पाणिर्गृहीतः,
[1]कामप्रत्यक्षमस्याः कृतकृतकरुषस्त्वाददे पादपद्मम् ॥ ३० ॥

[ हृदयरञ्जनी ]

**सानन्दमिति** । स 'ताडकारि' राम 'चिरं' सर्वदा 'व' युष्मान् 'अवतु' रक्षतु । किंलक्षण ? 'तदानीं' तस्मिन् समये 'कुलयुवतिजनै' सुवासिनीभि 'सानन्दं' सहर्षं 'गीयमान' गीयते स्म, 'बन्दिभि' मङ्गलपाठकै स्तूयमान, तथा 'लोके' तत्र तत्र समेतै मीलितै जनै 'आलोक्यमान' दृश्यमान, सानन्दमिति सर्वत्र सम्बन्ध्यम् । तदानीमिति किम् ? यदा 'येन' रामेण त्रिभुवनविदितं यथा भवति तथा 'क्षोणिप्रसूते' क्षितिसुताया 'देव्या' सीताया पाणिर्गृहीत । यदा यो राम सप्तपदीक्रमणसमये 'कामप्रत्यक्षं' कामेन—अभिलाषेन प्रत्यक्ष यथा स्यात्तथा 'अस्या' सीताया 'पादपद्मं' चरण कमलमाददे । किम्भूताया अस्या ? 'कृतकृतकरुष' कृता कृतका—मिथ्या रुट्—कोपो यया तस्या । उक्ति—य कामी भवति स प्रणयकलहान्ताया वल्लभाया चरणे पतति, तस्या चरणप्रापणव्याजेन ननामेति उत्प्रेक्षा ॥ ३० ॥

[ बालबोधिनी ]

**सानन्दमिति** । स 'ताडकारि' राम 'व' युष्मान् 'चिर' चिरकाल 'अवतु' पातु । किंलक्षण ? 'सानन्द' सहर्षं यथा भवति तथा 'कुलयुवतिजनै' स्वकुलवृद्धस्त्रीसमूहै गीयमान । पुन किंलक्षण ? 'बन्दिभि' स्तावकजनै स्तूयमान । पुन किंलक्षण ? 'लोकै' जनैरालोक्यमान । स क ? 'येन' रामेण 'तदानीं' तस्मिन्नवसरे 'त्रिभुवनविदित' स्वर्गमृत्युपातालप्रसिद्ध यथा भवति तथा 'क्षोणिप्रसूते देव्या' सीताया 'पाणि' करो गृहीत । 'तु' अपर पुन 'काम' कन्दर्प अस्या 'कृतकृतकरुष' मिथ्याकृतकोपाया सीताया 'प्रत्यक्ष' समक्ष यथा भवति तथा 'पादपद्म' चरणकमल 'आददे' गृहीतवान् ॥ ३० ॥

अन्योन्यालोक[2]लुब्धप्रणयननलिनयोः युग्ममन्यो[3]न्यजल्प-
श्रद्धालुश्रोत्रयोस्तज्जनकदशरथापत्ययोः पातु युष्मान् ।

---

१ काम प्र भा ३-४ । एतत्पाठानुसारेण बालबोधिन्यां व्याख्या वर्तते ॥ २ °लुब्ध नयन° भा. ३-४ । एतत्पाठभेदानुसारेण बालबोधिन्यां व्याख्या वर्तते ॥ ३ बालबोधिन्यां अन्योन्यजल्पश्रद्धालु इति पृथक्पदम् ॥

**अन्योन्यस्वान्तचौरं स्मरधरणिपतौ स्नेहपाशेन बद्ध्वा,**
**मज्जीभूते प्रहर्तुं यदभवदवनायालमन्योन्यमेव ॥ ३१ ॥**

[ हृदयरञ्जनी ]

**अन्योन्यालोकेति** । ' जनक-दशरथापत्ययो ' जनकापत्य सीता दशरथापत्य राम तयोर्युग्म–द्वन्द्व युष्मान् ' पातु ' रक्षतु । किम्भूतयो ? ' अन्योन्यालोकलुभ्यन्नयन नलिनयो ' अन्योन्य–परस्पर आलोक –दर्शन तत्र लुभ्यती–लोभ गच्छन्ती चपले लोले नयननलिने–नेत्रकमले ययोस्ते तयो । पुन किम्भूतयो ? ' अन्योन्यजल्पश्रद्धालु-श्रोत्रयो ' अन्योन्य जल्प –मिथ्याभाषण तत्र श्रद्धालुनी–उत्कण्ठिते श्रोत्रे–श्रवणे ययोस्ते तयो, अन्योन्यभाषणश्रवणे कुतूहल्यो । तदिति किम् ? ' यद् ' युग्म ' अन्योन्य ' परस्पर ' अल ' अत्यर्थं ' अवनाय ' रक्षणायाभवत् । क्व सति ? ' स्मरधरणिपतौ ' स्मर एव धरणिपति –राजा तस्मिन् स्मरधरणिपतौ ' स्नेहपाशेन ' स्नेह –प्रीतिरेव पाश –रज्जु तेन अन्योन्यस्वान्तचौर युग्म बद्ध्वा प्रहर्तुं सज्जीभूते सति । यथा कस्मिंश्चिद् राजनि अन्योन्यस्वान्तचौर परस्परद्रव्यापहारिणौ पुरुषौ पाशेन बद्ध्वा हन्तुमुद्युक्ते सति तौ यथा आत्मान ' अवत ' रक्षत । अत्र संयोग( ? सम्भोग )शृङ्गारललनालम्बनोद्दीपनकारणेन रति स्थायी भावो जनित, अन्योन्यदर्शन-संलाप कटाक्षविक्षेपै कार्यै अनुभावै प्रतीतियोग्य ब्रीड चपलादिव्यभिचारिभावैरुपचरित ।

चेष्टा भवति पुष्णार्योर्या रत्युत्थानिरिक्तयो ( ? ) ।
शृङ्गारो विप्रलम्भश्च ।

तत्राऽऽद्ये यद्यपि परस्परालोकयोर्नान्योन्यभावोपपत्तिरे[ ति ] चुम्बनाद्यनन्तभेदो भवति, तद्भेदा वक्तु न शक्यन्ते, अत एव एक इत्युच्यते । ओजो गुणोऽत्र यद्यपि रसप्रतिकूलोऽपि माधुर्यादिगुणसाहचर्यान्नुप्रासालङ्कारानुरोधाच्च न विरोधी, अतो गौडीया रीति ।

समस्तात्युल्वणपदमोज कान्तिगुणान्वितम् ।
गौडीयामपि गाय वीरीटिविचक्षण ( ? ) ॥ १ ॥

[ ] ॥ ३१ ॥

[ बालबोधिनी ]

अन्योन्येति । तद् ' जनक-दशरथापत्ययोर्युग्म ' सीतारामयुग्म युष्मान् पातु । किम्भूत तद् ? ' यद् ' युग्म ' स्मरधरणिपतौ ' कन्दर्परूपे राजनि ' स्नेहपाशेन बद्ध्वा ' वात्सल्यरूपेण पाशेन बद्ध्वा ' प्रहर्तुं ' मारयितु सज्जीभूते सति ' अन्योन्य ' परस्परमेव

'अलनाय' रक्षणाय 'अल' समर्थमभवत्। स्मरे धरणिपतित पुन.? सीता रामयो· स्मरवशत्वात्। किंलक्षण युग्मम्? 'नयननलिनयो' चक्षुःपद्मयो· 'अन्योन्यालोकलुब्ध' परस्परदर्शने लोभयुक्तम्। पुनः किंलक्षणम्? 'श्रोत्रयो·' कर्णयो· 'अन्योन्यजल्पश्रद्धालु' परस्परवचने श्रद्धायुक्तम्। पुन किंलक्षणम्?' 'अन्योन्यस्वान्तचौर' परस्पर चित्तहारि॥३१॥

*

**वैदेहीवल्लभो वः स भवतु विभवोत्पत्तये यत्प्रियायाः,**
**सर्वानापृच्छय बन्धून् पतिभवनमभि प्रस्थितायास्तदानीम्।**
**सावश्यायाम्बुलेशं कमलमिव गलद्बाष्पमालोक्य वक्त्रं,**
**को वा नाऽऽविश्चकार द्रवदिव हृदयं मूर्त्तमश्रुच्छलेन ?॥ ३२॥**

[हृदयरञ्जनी]

**वैदेहीति।** स 'वैदेहीवल्लभ' सीतारमण 'व' युष्माक 'विभवोत्पत्तये' ऐश्वर्योत्पादनाय भवतु। वैदेहीवल्लभ इति साभिप्राय विशेषणम्, कथम्? "अङ्के निषण्ण सीता यं भजता कल्पभूरुह ।" इति अनुमानालङ्कारोऽपि सूचित । स क? तदानीं 'यत्प्रियाया' यस्य प्रिया–सीता तस्या 'वक्त्र' मुख आलोक्य 'अश्रुच्छलेन' अश्रु व्याजेन 'मूर्त्त' मूर्त्तीभूत 'हृदय' मन द्रवदिव वा को न आविश्चकार?, उत्प्रेक्षते द्रवदिव। किम्भूत वक्त्रम्? 'गलद्बाष्प' गलन्त बाष्पा–अश्रूणि यस्मिन् तत्। किमिव वर्त्तमानम्? कमलमिव। किम्भूत कमलम्? 'सावश्यायाम्बुलेश' अवश्याय–नीहार तस्य अम्बु–पानीय तस्य लेश–कण तेन सह वर्त्तते सावश्यायाम्बुलेशम्। कदा यदा किम्भूताया यत्प्रियाया? 'पतिभवनमभि प्रस्थिताया' भर्तृगृहमभि चलिताया। किं कृत्वा? सर्वान् बन्धून् 'आपृच्छय' आमन्त्र्य। असङ्गतिरलङ्कार। निर्वेदो व्यभिचारी रसीभूत करुणतामवलम्बते, वास्तवालङ्कारश्च। कन्याया पतिगृह प्रस्थिताया बन्धूना हृदय द्रवीभवतीति स्वभाव। तथा चोक्तं **कालिदासेन शाकुन्तले—**

यास्यत्यद्य शकुन्तलेति हृदय सस्पृष्टमुत्कण्ठया,
कण्ठ स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।
वैक्लव्य मम तावदीदृशमहो! स्नेहादरण्यौकस,
पीड्यन्ते गृहिण कथ न तनयाविश्लेषदु खैर्नवै॥ इति।

[अङ्क ४ श्लो० ५]॥३२॥

## [ बालबोधिनी ]

वैदेहीति। स 'वैदेहीवल्लभः' रामः 'वः' युष्माकं विभवोत्पत्तये भवतु। विभवस्य-समृद्धेरुत्पत्तिः विभवोत्पत्तिः तस्यै। स कः? 'पतिप्रियायाः' सीतायाः 'तदानीं' तस्मिन्नवसरे 'वक्त्रं' मुखं 'आलोक्य' दृष्ट्वा 'अश्रुच्छलेन' अश्रुमिषेण कृत्वा मूर्त्तमिव द्रवद् अश्रुद्रवद् हृदयं को वा नाऽऽविश्चकार? अपि तु सर्वेऽपि आविश्चक्रुरेव। किंलक्षणं वक्त्रम्? उत्पश्यत 'सावश्यायाम्बुलेशं कमलमिव' नीहारोदककणसहितं पद्ममिव। किंलक्षणम्? यत् 'गलद्बाष्पं' गलन्ति-पतन्ति बाष्पाणि-अश्रूणि यस्मात् तद् गलद्बाष्पम्। किंलक्षणायाः सीतायाः? 'तदानीं' तस्मिन्नवसरे 'सर्वान् बन्धून्' भ्रातृसख्यादीन् आपृच्छ्य 'पतिभवनं' रामगृहं अभि 'प्रस्थितायाः' प्रस्थानं कुर्वन्त्याः। यद्यपि हृदयं मूर्तं नास्ति तथापि तस्मिन्नवसरे सर्वेषां जनानां हृदयं मूर्त्तमिव जातं ततोऽश्रूणि द्रवदिव॥ ३२॥

* ।

**एकः पात्राय दत्त्वा श्रियमिव तनयां मन्यमानः कृतार्थं,**
**स्वात्मानं सिद्धविद्यामिव तनयवधूं प्राप्य भूयो द्वितीयः।**
**आप्रष्टुं तौ प्रवृत्तौ कथमपि च मिथो यद्धसर्वस्वबुद्धी,**
**यत्रैकत्रैकलोकं पृथुगुणसुभगौ स्तान्मुदे वः स देवः॥ ३३॥**

## [ हृदयरञ्जनी ]

**एकः पात्रायेति।** 'सः' रामाख्यो देवः 'वः' युष्माकं 'मुदे' हर्षाय 'स्ताद्' भूयात्। स्तादिति कः? 'यत्र' यस्मिन् रामे एकत्रैकलोकं यथा भवति तथा, एकत्र-एकस्मिन् रामे एकमुखो लोकः-जनो यस्मिन् कर्मणि तद् एकत्रैकलोकं 'तौ' जनक-दशरथौ बद्धसर्वस्वबुद्धी अभूताम्, बद्धा सर्वस्वबुद्धिर्याभ्यां तौ। किंभूतौ? 'पृथुगुणसुभगौ' पृथवश्च ते गुणाश्च तैः सुभगौ, महद्गुणयुक्तावित्यर्थः। पुनः किंभूतौ? 'मिथः' अन्योन्यं 'कथमपि' महता कष्टेन गन्तुं आप्रष्टुं प्रवृत्तौ, स्वं स्वं नगरं प्रति गन्तुमापृच्छ्यमानौ। तौ कौ? तयोर्द्वयोर्मध्ये 'एकः' जनकः 'स्वं' आत्मानं कृतार्थं मन्यमानः। किं कृत्वा? 'पात्राय' रामाय 'तनयां' सीतां पुत्रीं दत्त्वा। कामिव? श्रियमिव। 'द्वितीयः' दशरथः 'तनयवधूं प्राप्य' स्नुषां प्राप्य आत्मानं कृतार्थं मन्यमानः सिद्धविद्यामिव, यथा कश्चित् पात्रे उक्तलक्षणे लक्ष्मीं निक्षिप्य सिद्धविद्यां च लब्ध्वा कृतकृत्यो भवति तद्वदित्यर्थः। उपमा॥ ३३॥

१ 'कश्चित् साकांक्षगुरु' एतत्पाठानुसारेण बालबोधिनीव्याख्या ॥

## [ बालबोधिनी ]

एक पात्रायेति । 'स देव ' राम 'व ' युष्माक 'मुदे ' हर्षाय 'स्तात् ' अस्तु । स क ? 'तौ ' जनक-दशरथौ यत्र 'एकत्रैव ' रामे बद्धसर्वस्वबुद्धी सन्तौ 'कथमपि ' महता कष्टेनापि 'मिथ ' परस्पर आप्रष्टु तौ 'प्रवृत्तौ कृतोद्यमौ जातौ । बद्धा सर्वस्व बुद्धिर्याभ्या रामे तौ बद्धसर्वस्वबुद्धी । किंलक्षणे यत्र ? 'लोकम्पृणगुणसुभग ' लोकान् पृणन्ति पूरयन्तीति लोकम्पृणा, ते च ते गुणाश्च तै सुभग -सुन्दर तस्मिन् लोकम्पृणगुण सुभगे । किंलक्षणौ तौ ? तयोर्मध्ये 'एक ' राजा जनक 'पात्राय ' रामाय 'तनया ' सीता दत्त्वा स्वात्मान 'कृतार्थं ' कृतकार्यं म यमान । कामिव ? 'श्रियमिव ' यथा कश्चित् पुमान् पात्राय श्रिय दत्त्वा स्वात्मान कृतार्थं मन्यते । द्वितीय भूप ' दशरथश्च तनयवधू प्राप्य स्वात्मान कृतार्थं मन्यमान । कामिव ? 'सिद्धविद्यामिव ' यथा कश्चित् पुमान् सिद्धां-सिद्धिप्रदा विद्या प्राप्य स्वात्मान कृतार्थं म यते ॥ ३३ ॥

*

**तैर्ज्ञातैर्दुर्निमित्तैर्मखमथनधनुर्भङ्गतुङ्गीकृतभ्रू-**
**भङ्गेऽभ्यायाति भास्वत्तरपरशुशिखाजागृवौ जामदग्न्ये ।**
**मुख्यो वैखानसानामयमिति समिति क्षुण्णराजान्वयश्चे-**
**त्यासीद् यस्तद्दिदृक्षारसरसिकमतिः पातु स श्रीपतिर्वः ॥ ३४ ॥**

## [ हृदयरञ्जनी ]

**तैर्ज्ञातैरिति** । स श्रीपति 'व ' युष्मान् पातु । स इति क ? 'य ' राम 'इति ' हेतो 'तद्दिदृक्षारसरसिकमतिरासीत् ' तस्य दिदृक्षा तस्या रस तेन रसिका-रसवती मति-बुद्धिर्यस्य स परशुरामदर्शनोत्सुकमति । इतीति किम् ? 'अय ' परशुराम 'वैखानसाना ' वानप्रस्थाना 'मुख्य ' आद्य श्रेष्ठ, अपर जामदग्न्य 'समिति ' सङ्ग्रामे 'क्षुण्णराजान्वय ' क्षुण्ण -परास्त राजान्वय -क्षत्रियवशो येन स, अत एव तद्वीक्षण-रसिक, निर्वेदोत्साहवर्द्धितयो शान्त-वीररसयोरुदय । क सति ? 'तै ' प्रसिद्ध 'ज्ञातै ' अनगत 'दुर्निमित्तै ' दिग्दाह प्रचण्डप्रतिकूलमारुत शृगालशब्दादिभि शकुनै सह 'जामदग्न्ये ' परशुरामे अभ्यायाति सति, सहोक्तिरलङ्कार । जमदग्नेरपत्य जामदग्न्य तस्मिन् परशुरामे, परशुना-कुठारेण उपलक्षितो राम परशुराम तस्मिन् अभिमुखमागच्छति सति । किम्भूते जामदग्न्ये ? 'मखमथनधनुर्भङ्गतुङ्गीकृतभ्रूभङ्गे ' मखमथनस्य-श्रीमहादेवस्य धनु -कार्मुक तस्य भङ्ग तेन तुङ्गीकृत -ऊर्ध्वीकृत ललाट प्रापित भ्रूभङ्ग -भ्रूरचना येन स

तस्मिन्। पुन किम्भूते जामदग्न्ये ? 'भास्वत्तरपरशुशिखाजागृवौ' अतिशयेन भास्वन्ती भास्वत्तरा, सा चासौ परशुशिखा च—कुठारधारा तस्या जागृवि—जागरूक तस्मिन्॥ ३४ ॥

[ बालबोधिनी ]

तैर्ज्ञातिरिति। स 'श्रीपति' राम 'व' युष्मान् पातु। स क ? यो राम 'इति' कारणाद् 'जामदग्न्ये' परशुरामे तद्दिदृक्षारसरसितमति 'आसीद्' बभूव। तस्य—परशुरामस्य द्रष्टुमिच्छाया योऽय रसस्तस्मिन् रसवता मति—बुद्धिर्यस्यासौ। इतीति किम् ? 'अय' परशुराम 'वैखानसाना मुख्य' ऋषीणां अग्रणी, 'च' अपर 'समिति' सङ्ग्रामे 'क्षुण्णराजन्यक' चूर्णीकृतक्षात्रियवश। किंलक्षणे जामदग्न्ये ? तैर्ज्ञातैरपि 'दुर्निमित्तै' दुष्टकारणै 'अभ्यायाति' अभ्यागच्छति। पुन किंलक्षण ? 'मखमथनधनुर्भङ्गतुङ्गीकृतभ्रूभङ्गे' महादेवस्य चापभङ्गेन दीर्घीकृतवक्राक्षे। पुन किंलक्षण ? 'भास्वत्तरपरशुशिखाजागृवौ' दीप्तिमता या कुठारधारा तस्यां जागरूके॥ ३४ ॥

*

**सावज्ञस्तत्र राज्ञि प्रणमति पुरतः सर्वपात्रे[1] वसिष्ठे,**<br>
**तिष्ठत्यक्षिप्तचक्षुः कुशलयति जने साञ्जलौ बद्धमौनः।**<br>
**भङ्क्त्वा भूतेशचापं क गत इति रुषा भाषमाणो महर्षिः,**<br>
**काकुत्स्थेनोपतस्थे स्मितमधुरमुखं[2] येन सोऽव्यादिह वः॥ ३५॥**

[ हृदयरञ्जनी ]

सावज्ञस्तत्रेति। स 'व' युष्मान् 'अव्याद्' रक्षतु। स क ? येन 'काकुत्स्थेन' रामेण 'स्मितमधुरमुख' स्मितेन—हासेन मधुरं—मनोज्ञ मुख यस्मिन् कर्मणि तत्। 'महर्षि' जामदग्न्य 'उपतस्थे' प्राप्त। कर्मणि लकार। किम्भूतो महर्षि ? 'इति रुषा भाषमाण' 'इति' वक्ष्यमाणप्रकारेण 'रुषा' कोपेन 'भाषमाण' वदन्निति। किम् ? हे राम! भूतेशचाप भङ्क्त्वा 'क गत' क प्रदेश गतोऽसि ? इति, पलाय्येति शेष, क गच्छसि वा ?। पुन किंलक्षणो महर्षि ? 'तत्र राज्ञि' दशरथ 'प्रणमति सति' नमस्कारं कुर्वति सति 'सावज्ञ' अवज्ञया सह वर्तते सावज्ञ, अथवा प्रणमति दशरथ सावज्ञ समपश्यदित्यर्थ। पुन किंलक्षण ? 'सर्वपात्रे' सर्वेषां—राजब्रह्मर्षीणां पात्रे—पूज्ये 'पुरत' अग्रे तिष्ठति वसिष्ठे 'अक्षिप्तचक्षु' न क्षिप्त चक्षु—नेत्र येन स अक्षिप्तचक्षु। वसिष्ठ

१ सार्वपात्रे मा १२१४। एतत्पाठभेदानुसारेण बालबोधिन्यां व्याख्यातोऽस्ति॥
२ 'वसिष्ठे स्मित' भा १॥

विशेषणद्वयमपि पूज्यत्वाव्यवधानसूचकम् । पुनः किंलक्षणे ? [ १ 'जने' ] मन्त्रिलोके अमात्यवर्गे **सुमन्त्र**प्रभृत्यमात्यजने 'बद्धमौन' बद्धं मौनं येन स बद्धमौनः । किम्भूते मन्त्रिजने 'साञ्जलौ' अञ्जलिसहिते सादरनमस्कारपरे । पुनः किंलक्षणे ? 'कुशलयति' कुशलं पृच्छति । रामे धृतेर्भावस्योदयः, इतरेषु विषाद त्रास जडतादीनां भावानामुदयः । जामदग्न्यगतभयानकरसप्रतीतिः रामगतवीररसप्रतीतिः । वैदर्भी रीतिः ॥ ३५ ॥

[ बालबोधिनी ]

**सावज्ञ** इति । स रामः 'वः' युष्मान् 'चिरं' चिरकालं 'अव्याद्' रक्षतात् । सः कः ? येन 'काकुत्स्थेन' रामेण 'महर्षि' परशुरामं स्मितमधुरमुखं यथा भवति तथा 'उपतस्थे' उपस्थितम् । सस्मित-ईषद्धास्ययुतं अत एव मनोहरं वक्त्रम् । किंलक्षणो महर्षि ? 'रुषा' कोपेन कृत्वा इति भाषमाणः । इतीति किम् ? 'भूतेशचापं' ईश्वरधनुः 'भङ्क्त्वा' चूर्णीकृत्य 'क्व गतः ?' कुत्र गतः ? । पुनः किंलक्षणः ? 'पुरतः' अग्रतः 'प्रणमति' नमस्कुर्वति राज्ञि दशरथे 'सावज्ञः' अवगणनासहितः । पुनः किंलक्षणः ? 'सार्धं पात्रे' सार्धे वसिष्ठे 'तिष्ठति' स्थिते अक्षिप्तचक्षुः, पुरःस्थितमपि वसिष्ठं न पश्यतीत्यर्थः । पुनः किंलक्षणे ? 'कुशलयति' कुशलं-कल्याणं आचक्षाणे 'जने' लोके 'साञ्जलौ' अञ्जलिसहिते बद्धमौने "तत् करोति तदाचष्टे" [ पाणिनिवार्तिकम् ]इति णिच् । लोका कुशलं आचक्षते 'स्वामिन् ! कुशलम्' इति तत्र वदति ॥ ३५ ॥

*

**देवो यः शास्त्रविद्याभ्यसनसुधि मया स्कन्दमास्कन्यमानं,**
**दृष्ट्वा स्वामिद्रुहोऽपि व्यधित मम समं हैमवत्या प्रसादम् ।**
**श्रुत्वा तस्यापि चापक्षयमहमनहङ्कारितारिर्विपद्ये,**
**नाद्यापीति ब्रुवाणं मुनिमभि विमनीभावशून्यः स वोऽव्यात्**
**॥ ३६ ॥**

[ हृदयरञ्जनी ]

**देवो यः शास्त्रविद्येति** । 'स' रामो 'वः' युष्मान् 'अव्यात्' पातु । किम्भूतः ? मुनिं 'अभि' लक्षीकृत्य तदुद्दिश्य 'विमनीभावशून्यः' अविमना विमना सम्पद्यते विमनीभावः, तेन शून्यः-रहितः दुर्मनस्त्वरहितः, निर्भयत्वं व्यङ्ग्यम् । किंलक्षणं मुनिम् ? 'इति ब्रुवाणं' 'इति' अमुना प्रकारेण कथयन्तम् । इतीति किम् ? 'तस्यापि' महेशस्यापि 'चापक्षयं' धनुर्भङ्गं 'श्रुत्वा' आकर्ण्य येन रामेण 'अहं' जामदग्न्य

१ मनु वि भा १ २ ३ ४ । एतत्पाठानुसारेण बालबोधिनीव्याख्या ॥

अद्यापि ‘अनहङ्कारितारि’ अहङ्कार–अभिमानोऽस्यास्तीति अहङ्कारी तस्य भाव तत्ता अहङ्कारितागुण, न विद्यते अहङ्कारिता यस्य स अनहङ्कारित, स चासावरिश्च अनहङ्कारितारि। अथवा अहङ्कार सञ्जात अहङ्कारित, स चासौ अरिश्च अहङ्कारितारि, न अहङ्कारितारि अनहङ्कारितारि [न विपद्ये], अजाताहङ्कार मां जानातीत्यय राम इत्यर्थ। धनुर्भङ्गे जामदग्न्यस्य अहङ्कार किं कारण तत् प्रतिपादयितु देवस्य सहिष्णु दर्शयति। तस्येति क ? ‘यो देव’ महेश स्वामिद्रुहो मम प्रसाद ‘व्यधित’ चक्रे। कया सह ? ‘सम हैमवत्या’ देव्या पार्वत्या सह, न केवल महेश ‘प्रसाद’ कृपा चक्रे किन्तु जगज्जनन्यपि पार्वती चक्रे इति वाक्यार्थ। किं कृत्वा ‘दृष्ट्वाऽपि, कम् ? ‘कुमार’ स्कन्द दृष्ट्वाऽपि। किंलक्षण स्कन्दम् ? ‘शस्त्रविद्याभ्यसनभुवि’ शस्त्राभ्यासभूमिकाया ‘मया’ परशुरामेण ‘स्कन्द्यमान’ पराभूयमान निर्जित दृष्ट्वाऽपि ममोपरि प्रसादमेव कृतवान्, न कोपमित्यर्थ, मम वीर्यातिशयेन हृष्ट इत्यर्थ। पराक्रमेण ईशपुत्रादधिकोऽहमिति व्यङ्ग्यम्। स्मृत्यसूययोर्व्यभिचारिभावयो सन्धि। वीररसस्योदय ॥ ३६ ॥

[ बालबोधिनी ]

देवो य शस्त्रविद्येति। ‘स’ राम ‘व’ युष्मान् ‘अव्याद्’ रक्षतात्। स क ? यो राम इति ‘ब्रुवाण’ वदन्त ‘मुनिमनु’ परशुरामे ‘विमनाभावशून्य अभूद्’ दुष्टचित्त य रहितो बभूव। इतीति किं ब्रुवाणम् ? अह ‘तस्यापि’ देवस्य ‘चापक्षय’ धनुर्भङ्ग ‘श्रुत्वा’ आकर्ण्य अद्यापि ‘न म्रिये’ अद्यापि जीवन्नस्मि, विपत्ति न प्राप्नोमि। किंलक्षणोऽहम् ? ‘अनहङ्कारितारि’ अहङ्कार त्याजिता रिपव येन स। असौ क ? तस्य कस्य ? य ‘देव’ महादेव ‘शस्त्रविद्याभ्यसनभुवि’ धनुर्विद्याभ्यासभूमिकायां ‘मया’ परशुरामेण ‘स्कन्द’ कार्त्तिकेय आस्कन्द्यमान’ आकृष्यमाण दृष्ट्वा ‘स्वामिद्रुहोऽपि’ गुरुद्रोहिणोऽपि मम ‘हैमवत्या’ पार्वत्या सम ‘प्रसाद’ स्तु नैव ‘व्यधित’ अकृत॥ ३६ ॥

*

यस्मिन्नुत्तुङ्गशृङ्गे अपनि गिरिशरिपो पश्चिमस्य प्रतिष्ठां,
न प्राप क्षिप्रमस्त्र न दशशतकरः कार्त्तवीर्योऽर्यमेव।
कल्पान्तोद्दीप्तदर्पि कथमपि नहुतसुधालपरूपाय तस्मै,
धीरो नीरोप भीतिर्मुनिरिति नतवान् य स हु व यताद् व ॥ ३७ ॥

१ प्रास विप्र० भा १४। एतत्पाठभेदानुसारेण बालबोधिनी व्याख्या वर्तते। प्रास्त्र भिन्न भा १२॥ २ दर्पान्धर्वि भा १४। एतत्पाठभेदानुसारेण बालबोधिन्यामन्तरे व्याख्या वर्तते॥

## [ हृदयरञ्जनी ]

**यस्मिन्नुत्तुङ्गेति।** स 'व दुःखं घताद्' युष्माकं दुःखं खण्डयतु । स कः ? 'य' रामः 'तस्मै' जामदग्न्याय अयं 'मुनिरिति' "क्षत्रियाणां मुनिर्वन्द्यः" इति मत्वा 'नतवान्' नमश्चकार। किम्भूतः रामः ? 'धीरः' धीरोदात्तत्वात्। पुनः कीदृशः ? 'नीरोष-भीतिः' रोषश्च भीतिश्च रोष-भीत्यौ, निर्गते रोष-भीत्यौ–कोप-भये यस्मात् स नीरोषभीतिः, गाम्भीर्यं व्यङ्ग्यम्। किंविधाय मुनये ? 'कल्पान्तेति०' कल्पान्ते–कल्पक्षये उदञ्चन्ति यानि अर्चींषि–ज्वालाः तैः कवचितः–जटिलो व्याप्तः यः ईषदसमाप्तो हुतभुग् हुतभुक्कल्पः रूपं यस्य स तस्मै कल्पान्तोदञ्चदर्चिःकवचितहुतभुक्कल्परूपाय। आत्मनो वीर्यशृङ्गं प्रकटयन्नाह–'कार्तवीर्यः' राजा सहस्रार्जुनः पश्चिमस्य 'शिखरिणः' पर्वतस्य उत्तुङ्गशृङ्गे 'प्रतिष्ठा' अवस्थानं न लेभे [इति न], भूर्लोके वा अवस्थानं नाऽऽप, सूर्यः [क्षिप्रं] अस्ताचलं प्राप्तं भार्गवं दृष्ट्वा, अस्तं गतवानित्यर्थः। सूर्योऽपि 'दशशतकरः' [सहस्र]किरणः। उपमा, शब्दश्लेषोऽपि (? श्लेषोऽपि), छेकानुप्रासः ॥ ३७॥

## [ बालबोधिनी ]

**यस्मिन्नुत्तुङ्गेति।** 'सः' रामः 'वः' युष्माकं 'दुःखं' अनिष्टं 'घताद्' अवखण्डयतु। स कः ? यो रामः 'तस्मै' परशुरामाय अयं 'मुनिः' ऋषीश्वरो वन्द्यः 'इति' कारणाद् 'नतवान्' नम्रोऽभूत्, न भीत्या। किंलक्षणो रामः ? 'नीरोषभीतिः' क्रोधभयरहितः। किंलक्षणाय तस्मै ? 'कल्पान्तोदञ्चदर्चिःकवचितहुतभुक्कल्परूपाय' जगतोऽन्ते ऊर्ध्वा या शिखास्ता एव सन्नाहीकृता येन अग्निना असौ कल्पान्तोदञ्चदर्चिःकवचितहुतभुक्, तस्य कल्प–तत्समानं रूपं–स्वरूपं यस्यासौ तस्मै। तस्मै कस्मै ? यस्मिन् 'उत्तुङ्गशृङ्गे' उच्चैस्तरस्कन्धे परशुरामे 'कार्तवीर्यः' राजा सहस्रार्जुनः 'क्षिप्रं' वेगेन 'अस्तं' क्षयं न प्राप्त इति न, किन्तु प्राप्त एव। किंलक्षणे यस्मिन् ? 'पश्चिमस्य शिखरिणः' अस्ताचलस्य 'प्रतिष्ठा' उपमां 'श्रयति' आश्रयति। क इव ? 'अर्यमा इव' यथा अर्यमा सूर्यः पश्चिमे शिखरिणि क्षिप्रमस्तं न प्राप्नोतीति न, किन्तु प्राप्नोत्येव। अर्थवशाद् विभक्तिविपरिणामः, अत्र यद्यपि षष्ठी तथापि सप्तमी व्याख्यायते। किंलक्षणोऽर्यमा कार्तवीर्यश्च ? 'दशशतकरः' सहस्रांशुः एवं सहस्रबाहुश्च। किंलक्षणे पश्चिमे शिखरिणि ? 'उत्तुङ्गशृङ्गे' उच्चैस्तरशिखरे ॥ ३७ ॥

**शस्त्रं शम्भोर्विभिद्य व्रणिततनु घुणश्रेणिभिः क्षत्रशावैः,**
**क्षीयो मा भूस्त्वदेतत्समयं ननु धनुर्वेष्टनाय चेत् त्वमुग्रः।**

---

१-२ °स्तर° भा ३ ४ ॥ ३ °य मम धनु° भा १ ॥ ४ °मुग्र भा १ ॥

**इत्युक्त्वा भार्गवेण प्रकटभ्रकुटिना प्रत्तमादाय चक्रे,**
**तन्नीचैर्यस्तदीयं मदमिव स मुदामास्पदं वः करोतु ॥ ३८ ॥**

[ हृदयरञ्जनी ]

**शस्त्रमिति ।** ‘स’ रामो ‘व’ युष्मान् ‘मुदा’ आनन्दाना ‘आस्पद’ स्थान करोतु । यो राम ‘तत् तदीय’ परशुरामसम्बन्धि धनु ‘नीचैश्चक्रे’ नम्र चक्रे, नमयति स्मेति । किं कृत्वा ? ‘आदाय’ गृहीत्वा । किंलक्षण धनु ? भार्गवेण इति उक्त्वा ‘प्रत्त’ दत्तम् । किंलक्षणेन भार्गवेण ? ‘प्रकटभ्रकुटिना’ प्रकटा भ्रकुटि –ललाटरेखा यस्य स प्रकटभ्रकुटि तेन । किमुक्त्वा ? इत्याह–‘हे ! क्षत्रशाव !’ क्षत्रियपोतडिम्भ ! ‘क्षीबो मा भू’ मत्त सगर्वो मा भव । किं कृत्वा ? शम्भो ‘शस्त्र’ धनु ‘विभिद्य’ भङ्क्त्वा । किंलक्षण धनु ? ‘घुणश्रेणिभि’ काष्ठकीटपङ्क्तिभि ‘व्रणिततनु’ व्रण सञ्जातमस्य, व्रणिता तनुर्यस्य, कीटकैर्भक्षितत्वान्नि सारमित्यर्थ, घुणोत्कीर्णमिति । ‘वा’ अथवा चेत् त्व ‘उष्ण’ सगर्वोऽसि, महेशधनुर्भङ्गेन जातगर्वोऽसि चेत् तर्हि एतद् वैष्णव धनुर्नमय’ नारायणीय धनुरधिज्य कुरुष्वेति । किमिव नीचैश्चकार ? ‘तदीय मदमिव’ परशुरामस्य ‘मदमिव’ गर्वमिव [ न केवल ] धनुर्नीच चक्रे किन्तु मदमपि चक्रे । उत्प्रेक्षालङ्कार, धनुषा सम तस्य परशुरामस्य मदमपीति सम्भवत्सदुक्त्यलङ्कारः । अनुप्रास ॥ ३८ ॥

[ बालबोधिनी ]

**शस्त्रं शम्भोर्विभिद्येति ।** ‘स’ राम ‘व’ युष्मान् ‘मुदा’ हर्षाणा ‘आस्पद’ स्थान करोतु । स क ? ‘य’ राम तद् वैष्णव ‘धनु’ चाप ‘आदाय’ गृहीत्वा ‘नीचै’ नम्र ज्याधिरूढ ‘चक्रे’ कृतवान् । किंलक्षण धनु ? उत्प्रेक्ष्यते–‘तदीय मदमिव’ तस्य– परशुरामस्य सारमिव । पुन किंलक्षण तत् ? ‘भार्गवेण’ परशुरामेण ‘इत्युक्त्वा’ इति कथयित्वा ‘प्रत्त’ दत्तम् । किंलक्षणेन भार्गवेण ? ‘प्रकटभ्रकुटिना’ प्रसिद्धवक्राक्षेण । इतीति किम् ? ‘क्षत्रशाव !’ हे क्षत्रशिशो राम ! ‘शम्भो’ ईश्वरस्य ‘शस्त्र’ धनु ‘विभिद्य’ भङ्क्त्वा ‘क्षीब’ मत्तो ‘मा भू’ मा भव, “माङि लुङ्” [ पाणिनि० ३ ३ १७५ ] इति माङ्योगे लुङ्विधानात् । कीदृश शस्त्रम् ? ‘घुणश्रेणिभि’ काष्ठकीटपङ्क्तिभि ‘व्रणिततनु’ सच्छिद्रशरीरम् । ‘चेद्’ यदि त्व उष्णस्तर्हि ‘एतद्’ इद ‘वैष्णव धनु’ विष्णोर्धनु ‘नमय’ नम्र कुरु ॥ ३८ ॥

*

**रामः श्यामद्युतिर्वो नव इव जलदः सम्मदायास्तु यस्मिन्,**
**निर्म्राणे जिष्णुचापं प्रशमयति सतामप्रियं चामृतेन ।**

---

१ °माश्रय ब भा १ ॥ २ णे रामसौध प्र भा १ ॥ ३ मृनूनन भा ३ ४ । एतत्पाठभेदानुसारेण बालबोधिन्यां व्याख्याऽस्ति ॥

**ग्रीष्मेणेव प्रयातं भृगुकुलपतिना केकिनेव प्रहृष्टं,**
**तातेनोर्वीधवेनोच्छ्वसितमचलयेवाचलोत्पन्नया च ॥ ३९ ॥**

[ हृदयरञ्जनी ]

**रामः श्यामद्युतिरिति ।** राम 'व' युष्माकं 'सम्मदाय' हर्षायास्तु प्रीतये भूयात् । किंलक्षण ? 'नव' तरुण किम्भूत ? श्यामद्युति श्यामा द्युति—कान्तिर्यस्य स श्यामद्युति सजलजलदकान्ति । क इव नव ? 'जलद इव' मेघ इव । 'भृगुकुलपतिना' भार्गवेण 'प्रयातं' निर्गतम् । केनेव ? 'ग्रीष्मेणेव' ऊष्मागमेनेव ग्रीष्मेण यथा गम्यते । क सति ? 'यस्मिन्' रामे 'जिष्णुचाप' जिष्णो—नारायणस्य चापं 'बिभ्राणे सति' धृते सति ग्रीष्मेण गम्यते तथा । का उपमा ? तथा 'ऊर्वीधवेन' भूभृता 'तातेन' दशरथेन 'हृष्ट' मुदितम् । केनेव ? 'केकिनेव' मयूरेणेव, यथा मयूरेण हृष्यते । क सतीति पूर्ववत् । 'अचलोत्पन्नया' सीतया 'उच्छ्वसित' रोमाञ्चितम्, अचला—पृथ्वी तस्या उत्पन्ना तया । कयेव ? 'अचलयेव' भूम्येव, यथा भूम्या उच्छ्वस्यते, न चलतीति अचला, "अचला स्थिरा धरित्री" इत्यमरः । क सतीति पूर्ववत् । किंलक्षणे रामे ? 'अमृतेन' अमृततुल्येन दर्शनेन वचनेन वा 'सता' सत्पुरुषाणा 'अप्रिय' अविनय 'शमयति' पराकुर्वति । किंलक्षणे मेघे ? 'अमृतेन' उदकेन 'सतां' लोकाना 'अप्रिय' अनावृष्टिलक्षण शमयति, नम्मिन्निति । क सतीति पूर्ववत् । मालोपमा ॥ ३९ ॥

[बालबोधिनी]

**राम श्यामेति ।** स राम 'व' युष्माकं 'सम्मदाय' हर्षाय 'अस्तु' भवतु । स कः ? 'यस्मिन्' रामे 'सूनृतेन' सत्यप्रियेण वचसा कृत्वा सता 'अप्रिय' अनिष्ट प्रशमयति । 'जिष्णुचाप' विष्णुधनुर्बिभ्राणे सति 'भृगुकुलपतिना' परशुरामेण 'प्रयात' गतम् । कीदृशो राम ? 'नवो जलद इव' प्रावृषेण्यो मेघ इव । कीदृशो रामो मेघश्च ? 'श्यामद्युति' श्यामा-कृष्णा द्युति—कान्तिर्यस्य स श्यामद्युति । कस्मिन् केनेव ? यथा नवे जलदे 'जिष्णुचाप' इन्द्रधनुर्बिभ्राणे 'अमृतेन' उदकेन कृत्वा सता 'अप्रिय' देहताप प्रशमयति सति ग्रीष्मेण प्रयायते तदा "अप्रियं चामृतेन" इति पाठ । अपर रामे जिष्णुचाप बिभ्राणे सति 'उर्वीधवेन' राज्ञा 'तातेन' पित्रा दशरथेन प्रहृष्टम् । केनेव ? केकिनेव, यथा नवे जलदे जिष्णुचाप बिभ्राणे सति 'केकिना' मयूरेण प्रहृष्यते । अपरं यस्मिन् रामे जिष्णुचाप बिभ्राणे सति 'अचलोत्पन्नया' सीतया उच्छ्वसितम् । कयेव ? अचलयेव,

१ 'सूनृतेन' इति पाठानुसारेण बालबोधिन्या व्याख्या दृश्यते ॥ २ इदं कोशावतरणं अमरकोशे नोपलभ्यते ॥

यथा नवे जलदे जिष्णुचाप बिभ्राणे सति अचलयोच्छ्रस्यते। अत्र सर्वत्र भावे प्रत्यया "तयोरेव कृत्यक्तखलर्था" [पाणिनि० ३ ४ ७०] इत्येतयोरेव क्तविधानाद् अनुक्तकर्तृत्वाद् अनभिहिते कर्त्तरि 'कर्तृकरणयो' [पाणिनि० २ ३ १८] इति तृतीयेति ॥ ३९ ॥

*

पत्नीं पश्यन् नवोढां तरुणिमनि नवे वर्त्तमानः प्रभावं,
पुष्णन् दोष्णोर्नवं च प्रणयमपि नवं दर्शयन्नाश्रितेषु।
प्रक्रान्तः काननान्तर्गतिकृतमतिना भूमिभर्त्ता नवो यः,
कर्त्तुं पित्रा पुराणः स्वयमथ च पुमान् स क्षणाद् वः पृणातु ॥४०॥

[हृदयरञ्जनी]

**पत्नीं पश्यन्निति**। 'स' राम 'व' युष्मान् 'क्षणात्' तत्क्षणात् 'पृणातु' प्रीणयतु, वितृष्णान् करोत्वित्यर्थ। किंलक्षणो राम? 'नवोढा' नवपरिणीता 'पत्नीं' जानकीं सीता पश्यन्। पुन किंलक्षण? नवे 'तरुणिमनि' तारुण्ये 'वर्त्तमान' तिष्ठ[न्नि]ति। तथा किं कुर्वन्? 'दोष्णो' भुजयोर्नव 'प्रभाव' सामर्थ्यं 'पुष्णन्' प्रकटयन्। तथा च आश्रितेषु जनेषु नव 'प्रणयं' स्नेह दर्शयन्। पुन किंलक्षण? 'पित्रा' दशरथेन नवो भूमिभर्त्ता यो राम कर्त्तुं प्रक्रान्त, य राम भूभर्त्तार कर्त्तुमिच्छतेत्यर्थ। किंलक्षणेन पित्रा? काननान्तर्गतिकृतमतिना काननस्य–अरण्यस्य अन्त–मध्य तत्र गति–गमन तत्र कृता मति–बुद्धिर्येन स तेन। अथ य स्वय च 'पुराण पुमान्' पुराणपुरुष, य पुराण पुरुष स कथ नव क्रियते? इति विरोध। दीपकमलङ्कार। यथा—

यत्रैकमनेकेषा वाक्यार्थाना क्रियापद भवति।
तद्वत् कारकपदमपि तदेतदिति दीपक द्वेधा॥.

अत्र प्रक्रान्त इत्यनेन निष्ठान्तक्रियापदेन सर्वेषा कारकपदाना सम्बन्ध इति कारकदीपकम्। परिकरालङ्कारश्च। यथा—

साभिप्राये सम्यग् विशेषणैर्वस्तु यद् विशेष्येत।
द्रव्यादिभेदभिन्न चतुर्विध परिकर स इति॥ ॥ ४० ॥

---

१ "भैवत्वं प्रग" भा १ ४॥ २ "मभिनङ्‌ इति पाठानुसारेणापि बालबोधिन्या व्याख्या वर्त्तते॥
३ क्षतात् भा १-४। एतत्पाठमेवानुसारेण बालबोधिन्या व्याख्या वर्त्तते॥ ४ व पुनातु भा १ ३॥

[बालबोधिनी]

पत्नीं पश्यन्निति। 'स' राम 'व' युष्मान् 'क्षताद्' भयात् 'पृणातु' रक्षतु। स क? 'य' राम 'पित्रा' दशरथेन 'स्वय' आत्मना पुराण पुमानपि 'नव' नूतन 'भूमिभर्त्ता' राजा कर्त्तुं प्रक्रान्त। किंलक्षणेन पित्रा? 'काननान्तर्गतिकृतमतिना' वनमध्य गमने कृता बुद्धिर्येनासौ तेन, 'अहं वनं गमिष्यामि, अस्मै रामाय राज्य प्रयच्छामि' इति पितुर्मति। किं कुर्वन्? 'नवोढा' नवपरिणीतां 'पत्नीं' सीता पश्यन्। किं क्रियमाण (? कुर्वाण)? 'नवे' नूतने 'तरुणिमनि' तारुण्ये वर्त्तमान। पुन किं कुर्वन्? 'दोष्णो' बाह्वो 'प्रभाव' बलवृद्धिं [नव] 'पुष्णन्' पोषण कुर्वन्। पुन किं कुर्वन्? 'आश्रितेषु भक्तेषु स्वसेवकेषु वा 'अभिनव प्रणय' अनेकप्रकारा प्रीतिं दर्शयन्॥ ४०॥

*

स्वोद्भूतैस्तैश्चतुर्भिर्मधुजिदिव भुजैः पौरुपोत्कर्षवद्भि-
र्वस्त्रैर्वेदावदातैः कमलतलचतुःशालशायीव देवः।
राजा विभ्राजमानः क्षितिभरधरणश्रान्तचित्तस्तमुच्चै-
र्योग्ये यस्मिन् निधित्सुर्दशमनिशमदादस्तु स स्वस्तिकृद् वः॥४१॥

[हृदयरञ्जनी]

स्वोद्भूतैरिति। 'स' रामो 'व' युष्माक 'स्वस्तिकृत्' कल्याणकृत् शुभङ्करोऽस्तु। स क? 'राजा' दशरथ 'यस्मिन्' रामे उच्चै 'त' क्षितिभर 'निधित्सु सन्' निक्षेप्तुकाम सन् 'दृशमदात्' दृष्टिं ददौ, इच्छां चक्रे। किंलक्षणो राजा? 'क्षितिभरधरण श्रान्तचित्त' क्षितेर्भर तस्य यद् धरण—वहन तेन श्रान्त—प्रशान्त चित्त—चेतो यस्य। किंलक्षणो राजा? विभ्राजमान—शोभमान। कै? 'स्वोद्भूतै' तनयै, स्वस्मादुद्भूता—उत्पन्ना तै, 'तै' प्रसिद्धै तनयै। कै क इव? 'मधुजिदिव भुजै'] हरिरिव यथा हरि स्वोद्भूतै चतुर्भिर्भुजै शोभते। किंलक्षणै तनयै? चतुर्भि रामादिभि। चतुर्भि किंलक्षणै तनयै भुजैश्च? 'पौरुषोत्कर्षवद्भि' पौरुषोत्कर्ष—पराक्रमातिशयो येषामस्तीति पौरुषोत्कर्षवन्त तै। पुन कै क इव? वेदावदातै चतुर्भि 'वक्त्रै' मुखै 'देव इव' ब्रह्मेव। किंलक्षणो ब्रह्मा? 'कमलतलचतु शालशायी' कमलतलमेव चतु शाल कमलतल-चतु शाल तत्र शेते शायी, कमलासन इत्यर्थ। भुजा अपि पौरुषोत्कर्षवन्त तदा अपि मालोपमा। मिलितस्य च बाहूपमानोपादाने मालोपमा भवति॥ ४१॥

१ दृश गा १॥

[ बालबोधिनी ]

स्वोद्भूतैरिति। 'स' राम 'व' युष्माक 'स्वस्तिकृत्' कल्याणकृदस्तु। स क? 'राजा' दशरथ 'यस्मिन्' रामे 'अनिश' निरन्तर 'दृश' दृष्टि 'अदाद्' आरा पितवान्। किंलक्षणो राजा? 'यस्मिन्' योग्ये रामे त उच्चैर्महद्राज्यभार 'निधित्सु' निधातुमिच्छन्। पुन किंलक्षणो राजा? 'क्षितिभरधरणश्रा ताचित्त' पृथिव्या भारस्य उद्धरणेन श्रान्तमना। किं कुर्वाणो राजा? 'तै चतुर्भि स्वोद्भूतै पुत्रै' राम भरत लक्ष्मण शत्रुघ्नै कृत्वा 'विभ्राजमान' दाप्यमान। कै क इव? 'भुजैर्मधुजिदिव' यथा मधुजिद्-वासुदेव चतुर्भि स्वोद्भूतै-स्वशरीरादुत्पन्नै भुजै कृत्वा विभ्राजन-दाप्यति। किंलक्षणैर्भुजै स्वोद्भूतैश्च? 'पौरुषोत्कर्षवद्भि' पुरुषार्थाधिक्यवद्भि। पुन कै क इव? 'वक्त्रै कमलतलचतु शालशायीव देव' कमलस्य तल चतु शाल-चतुरस्रमिव तस्मिन् शयितु शील स्वभावो यस्यासौ, यथा कमलतलचतु शालशायी देवो ब्रह्मा स्वोद्भूतैश्चतुर्भिर्वक्त्रै कृत्वा विभ्राजति। किंलक्षणै वक्त्रै? स्वोद्भूतैश्च? 'वेदावदातै' वेदै-श्रुतिभि ऋग् यजु सामा ऽथर्वभि पवित्रितै ॥ ४१ ॥

*

भद्रं श्रीरामभद्रः प्रथयतु भवतां य नृपत्वाभिषेक
प्राप्त सा प्रेषयन्ती विषमवनपथे मन्थरामन्त्रितेन।
अम्बा जम्बालमित्रैः क्षितितलमयशोराशिभिर्लिम्पति स्म,
प्रायः को वा कलङ्क जगति न लभते नीचवाक्यानुवर्त्ती? ॥४२॥

[ हृदयरञ्जनी ]

भद्रं श्रीरामभद्र इति। स रामभद्रो भवता 'भद्र' क्षेम 'प्रथयतु' विस्तारयतु। स क? 'य' राम 'अम्बा' कैकयी 'विषमवनपथे' वनस्य पन्था वनपथ, विषमश्चासो वन पथश्च तस्मिन्, निमित्तसप्तमी, दुर्गमवनवासनिमित्त प्रेषयन्ती सती 'अयशोराशिभि' अपकीर्त्तिपुञ्जे क्षितितल लिम्पति स्म, यथा गोमयेन धरणीतल लिम्पति तथेति। किंलक्षण रामम्? 'नृपत्वाभिषेकप्राप्त' नृपत्वस्य अभिषेक त प्राप्त अभिषेकार्थमागतम्। श्लेष। केन? 'मन्थरामन्त्रितेन' मन्थरावाक्येन, "मन्थरा किल स्वर्गात् कृत्या मन्थरारूपेण दशरथगृहे स्थिता सती रामस्य वनवासमासादयामास रावणादीना दैत्याना वधार्थम्" इत्यागमः, यथा इन्द्रादीना तत्तत्तिर्यग्योनिषु अवतारस्तथा कृत्याया अपि दास्यामिति। किंलक्षणै यशोभि? 'जम्बालमित्रै' कर्दमसदृशै, अपयशस कृष्णत्वात् कर्दमेन सदृशम्। अय भाव —मन्थरावाक्येन य राम वनवास प्रेषयन्ती 'अम्बा' माता कैकेयी आत्मानमयशोभाजन

चकारेति वाक्यार्थ, युक्तोऽयमर्थ । को वा पुरुष 'नीचवाक्यानुवर्त्ती' नीच–तुच्छजन तस्य वाक्यं–वचन अनुवर्त्तन इति अनुवर्त्ती–अनुसरणशील पृथग्जनवचनकर्त्ता सन् 'जगति' लोके 'कलङ्क' निन्दादोष न लभते ?, सर्वोऽपि प्राप्नोतीत्यर्थ । अर्थान्तरन्यासोऽलङ्कार ॥ ४२ ॥

## [ बालबोधिनी ]

**भद्रं श्रीरामेति।** स श्रीरामभद्र भवता भद्र 'प्रथयतु' विस्तारयतु । स क ? 'अम्बा' माता कैकेयी 'य' राम 'मन्थरामन्त्रितेन' कृत्वा(? कृत्या)दासीकथनेन कृत्वा 'विषमवनपथे प्रेषयन्ती' अक्रमणीये वनमार्गे प्रेरयन्ती सती 'अयशोराशिभि' अपकीर्तिसमूहै 'लिम्पति स्म' अलिम्पत् । किंलक्षण यम् ? 'नृपत्वाभिषेकप्राप्त' राज्याय अभिषेकप्राप्तम् । किम् ? यथा 'जम्बालमिश्रै क्षितितल' यथा कर्दमोदकाभ्या कृत्वा पृथिवीतल लिम्पति । युक्त चैतत्–'प्राय' बाहुल्येन 'नीचवाक्यानुवर्त्ती' निकृष्टवचनकर्त्ता पुमान् 'जगति' ससारे को वा कलङ्क न लभते ? अपि तु सर्वे लभन्त एव ॥ ४२ ॥

*

**दोषाः केचिद् गुणानामपि ? किमपि कृतं दुष्कृतं श्रेयसा किं ?,**
**व्यामोहः किं विधेरप्यनृतंहृतफलाः किं वसिष्ठाशिषोऽपि ?।**
**इत्थं यत्र प्रवृत्ते चलितुमनुवनं दुःखितानां जनाना-**
**माविर्भूता वितर्काश्चिरमवतु हरिः सोऽर्कवंशस्थितो वः ॥ ४३ ॥**

## [ हृदयरञ्जनी ]

**दोषाः केचिद् गुणानामिति।** स हरि 'व' युष्मान् पातु । किंलक्षण हरि ? 'अर्कवंशे स्थित' सूर्यवंशे स्थित कृतावतार 'चिरमिति' सर्वकाल । स क ? ['यत्र'] यस्मिन् 'अनुवन' वन लक्षीकृत्य उद्दिश्य 'चलितु' गन्तु प्रवृत्ते सति 'जनाना' लोकाना 'इत्थम्' एते 'वितर्का' विचारा 'आविर्भूता' उत्पन्ना । किंलक्षणाना जनानाम् ? 'दुःखिताना' सञ्जातदुःखानाम्, रामवियोगजनितदुःखपीडितानाम् । ते के वितर्का ? तानाह–'किमिति' वितर्के, गुणानामपि केचिद् दोषा भवन्ति ?, किं गुणै दोषा क्रियन्ते उत्पाद्यन्ते ? इति वितर्के । 'श्रेयसा' पुण्येनापि 'दुष्कृत' पापं कृत भवेत् ?, किं पुण्येनापि पाप क्रियते ? किं यत्र पुण्य तत्र पापभाव ? । अथ 'वसिष्ठाशिषोऽपि किम-

१ °मपि कृतमकृत ? दु° भा ३-४। °मथ कृतमकृत ? दु°, एतत्पाठानुसारेण बालबोधिन्यां व्याख्या विद्यते ॥ २ °तहृत° भा १। °तकृत° भा ३-४, एतत्पाठभेदानुसारेण बालबोधिन्यां व्याख्या वर्तते ॥ ३ °स्थितोऽपि भा २ ॥

नृतहृतफला ' वसिष्ठमहर्षे ' चिर राज्य कुरु, पृथ्वीं पालय ' इत्याद्याशिष –आशिर्वादा इष्टाशसनलक्षणा यास्ता आशिषोऽपि अनृतेन–असत्येन हृत फल यासाम्, ता वा अनृता सत्य हृतफला भवेयु ?। 'इत्थं' अमुना प्रकारेणाऽऽविर्भवेदिति। सन्देहालङ्कार। वितर्क निषादयोर्व्यभिचारिभावयो सन्धि। करुणरसोदय ॥ ४३ ॥

[ बालबोधिनी ]

**दोषा** केचिदिति। स 'अर्कवशस्थित ' सूर्यवशे स्थितो ' हरि ' श्रीराम 'व ' युष्मान् चिर ' अवतु ' रक्षतु। स क ? 'यत्र' रामे 'अनुजन' वने 'चलितु' गन्तु प्रवृत्ते सति ' दु खिताना ' दु खयुक्ताना 'जनाना' लोकाना ' इत्थ' अमुना प्रकारेण 'वितर्का ' विचारा 'आविर्भूता ' प्रकटीभूता उत्पन्ना । इत्थ कथम् ? गुणानामपि केचिद् दोषा ?, *अथ किं कृत अकृतम् ?, अथवा किं श्रेयसा दुष्कृतम् ?, अथ च किं ' विधेरपि ' ब्रह्मणोऽपि* ' व्यामोह ' महामोहो जात ?, किं वशिष्ठाशिषोऽपि अनृतहृतफला ? निष्फला इत्यर्थ ॥ ४३ ॥

*

**पायाद् वः पीनवासाः स विहितवसतिर्वासराधीशवंशे,**
**कुर्वन्त्या द्रागदृश्यं रविमिव विधुना यं सहैवानुजेन ।**
**सद्यः सम्पादयन्त्या जननयनघनोद्भ्रान्तवारिप्रवाहान्,**
**कैकेय्या प्रावृषेव त्रिभुवनमखिलं सान्धकारं व्यधायि ॥ ४४ ॥**

[ हृदयरञ्जनी ]

**पायाद् व** इति। ' पीतवासा ' पीत वास –वस्त्र यस्य स पीतवासा , " स हरिता-श्वसमाननवांशुक " इति **माघे**[ सर्ग ४ पद्य २१ ], ' स ' राम व पायात्। किंलक्षण पीनवासा ? ' वासराधीशवंशे' वासरा –दिवसा तेषा अधीश –सूर्य तस्य वंशे सूर्यान्वये 'विहितवसति ' कृता वसति –अवतारो येन। एवविध स व पायादित्याशी। स इति क ? एव कुर्वत्या कैकेय्या अखिलमपि त्रिभुवन सान्धकार ' व्यधायि ' कृतम्, शोकान्धकारे निहितमिति भाव । किं कुर्वत्या ? ' य ' राम ' अनुजेन ' लक्ष्मणेन ' सहैव ' इति एकेन लक्ष्मणेनेति एवकारार्थ , ' द्राग् ' झटिति ' अदृश्य ' लोचनपथातीत कुर्वाणया। कयेव ? ' प्रावृषा ' वर्षासमयेनेव। किं कुर्वत्या प्रावृषा ? ' विधुना ' चन्द्रमसा सह रविं शीघ्र अदृश्य विदधत्या। पुन किं कुर्वत्या ? ' सद्य ' तत्क्षणमेव ' जननयनघनोद्भ्रान्तवारिप्रवाहान् ' जन नयनान्येव घना–मेघा जलमुच उद्भ्रान्ता –निर्गता वारिप्रवाहास्तान् ' सम्पादयन्त्या '

जनयन्त्या कुर्वन्त्या । प्रावृषाऽपि मेघोद्गतजलप्रवाहा उत्पाद्यन्ते, अखिलमपि जगत् सान्धकारं क्रियते, उपमालङ्कार सहोक्तिश्च ॥ ४४ ॥

[ बालबोधिनी ]

**पायाद् व** इति । स 'पीतवासा' राम 'व' युष्मान् 'पायाद्' रक्षतु । किंलक्षण ? 'वासराधीशवंशे' सूर्यवंशे 'विहितवसति' कृता वसतिर्येनासौ । स क ? 'अनुजेन' लक्ष्मणेन सहित 'य' राम 'द्राक्' शीघ्र 'अदृश्य' अदर्शनाय कुर्वन्त्या कैकेय्या 'अखिल' समस्त त्रिभुवन '[1]सान्धकार' सदुःख 'व्यधायि' अकृत । क कयेव ? 'रविं प्रावृषेव' यथा प्रावृषा–वर्षाकालेन 'विधुना' चन्द्रमसा सहित रविमदृश्य कुर्वन्त्या 'अखिल' समग्र त्रिभुवन सान्धकार विधीयते । किंलक्षणया कैकेय्या ? 'सद्य' तत्क्षण 'जननयन घनोद्गतवारिप्रवाहान् सम्पादयन्त्या' लोकचक्षुर्भ्यो बहु यद उद्गत निर्गत वारि–उदक अश्रु तस्य प्रवाहास्तान् कारयन्त्या । किंलक्षणया प्रावृषा च ? घनोद्गतवारिप्रवाहान् सम्पादयन्त्या ॥ ४४ ॥

*

**चैतन्येनाग्रिमायाः सह सुजनतया मध्यमायाश्च मातुः,**
**पुत्रेणाप्यन्तिमायाः पितुरवनिपतेः प्राणितव्येन तूर्णम् ।**
**आनन्देन प्रजानां मुनिजनमनसां पूःश्रिया सीतया च,**
**प्राविक्षत् काननं यः स जनयतु परां राघवः श्लाघ्यतां वः ॥४५॥**

[ हृदयरञ्जनी ]

**चैतन्येनेति** । स 'राघव' रामो 'व' युष्माकं 'पराम्' उत्कृष्टां 'श्लाघ्यतां' लोकेषु स्तुत्यं जनयतु । स क ? [य] 'काननम्' अटवीं 'प्राविक्षत्' विवेश । कथं विवेश ? इति सहोक्तिमालालङ्कारेणाऽऽह–'अग्रिमाया' ज्येष्ठाया मातु 'चैतन्येन सह' कौशल्याचैतन्य गृहीत्वा वन प्राविशदिति सर्वत्र योज्यम् । 'मध्यमाया मातुश्च' कैकेय्या 'सुजनतया सह' सुजनता गृहीत्वेति । अपरम् 'अन्तिमाया मातु पुत्रेण' लक्ष्मणेन सह लक्ष्मण गृहीत्वेति । अन्यद् 'अवनिपते' राज्ञो दशरथस्य पितु 'प्राणितव्येन सह' जीवेन सह पितु प्राणान् गृहीत्वेति । 'च' अन्यत् 'प्रजाना' लोकाना 'आनन्देन' हर्षेण सह हर्षं गृहीत्वेति । 'मुनिजनमनसा' मुनिजनानां मनोभि सह मुनिमानसानि गृहीत्वेति । 'पूःश्रिया' नगरशोभया सह अयोध्याया शोभा गृहीत्वेति । अन्यच्च 'सीतया

---

१२ 'सान्धकारं' आ १२ ॥ ३ 'साऽऽस्थिषा इति पाठानुसारेण व्याख्यापि व्याख्या भवेत ॥

सह' सीता गृहीत्वेति । एवं प्रतिवाक्यं योज्यम् । वनं प्राविक्षदिति क्रियाकारकसम्बन्धः । कारकदीपकालङ्कारश्च । वैदर्भी रीतिः ॥ ४५ ॥

## [ बालबोधिनी ]

चैतन्येनेति । स 'राघव' रामः 'च' युष्माकं 'परा' उत्कृष्टा 'श्लाघ्यता' स्तुतियोग्यत्वं 'जनयतु' उत्पादयतु । स कः ? 'य' राम 'आप्तश्रिया' प्राप्तलक्ष्म्या सीतया सह 'कानन' वनं 'प्राविक्षत्' प्राप्तवान् । 'च' अपरं 'मुनिजनमनसा' ऋषिसमूहचेतसा 'कानन' वनं प्राविक्षत् । च 'अग्रिमायाः' प्रथमायाः 'मातुः' कौशल्यायाः 'चैतन्येन' मनसा सह 'कानन' वनं प्राविक्षत्, सा शून्या जातेत्यर्थः । 'च' अपरं 'मध्यमायाः' द्वितीयस्याः 'मातुः' कैकेय्याः 'सुजनतया सह' सौजन्येन सह काननं प्राविक्षत् । 'च' अपरं यो रामः 'अन्तिमायाः' तृतीयस्याः 'मातुः' सुमित्रायाः 'पुत्रेण' लक्ष्मणेन सह काननं प्राविक्षत् । स कः ? यो रामः 'तूर्णं' वेगेन 'अवनिपते' राज्ञः पितुः प्राणितव्येन सह काननं प्राविक्षत् । 'च' अपरं यो रामः 'प्रजानां' लोकानां 'आनन्देन' हर्षेण सह काननं प्राविक्षत् ॥ ४९ ॥

*

**श्वश्रूणामश्रुपूरान्तरितनयनता साधु सद्भिर्न मेने,**
**यस्मात् ताभिस्तदानीं कृतचरणनतिस्तूर्णमापृच्छमाना ।**
**सार्द्धं येन प्रयातु विषममपि वनं स्मेरवक्त्रारविन्दा,**
**वैदेही नाऽऽलुलोके स दहतु दुरितं दानवारिश्चिरं वः ॥ ४६ ॥**

## [ हृदयरञ्जनी ]

**श्वश्रूणामिति** । स दानवारिः 'वः' युष्माकं 'दुरितं' पापं चिरं दहतु । 'सद्भिः' सत्पुरुषैः 'श्वश्रूणां' कौशल्याप्रभृतीनां श्वश्रूणां 'अश्रुपूरान्तरितनयनता' अश्रूणां-बाष्पाणां पूरः-प्रवाहः तेन अन्तरिता-आच्छादिता नयनता-नेत्रत्वलक्षणो धर्मः साधु 'न मेने' न ज्ञाता । [ 'यस्मात्' ] यतः कारणात् 'ताभिः' श्वश्रूभिः सा 'वैदेही' सीता 'नाऽऽलुलोके' न दृष्टा 'तदानीं' तस्मिन् समये । कः समयः ? यदा रामेण 'सार्द्धं' सह 'विषममपि' दुर्विगाहमपि वनं 'प्रयातुं' गन्तुमापृच्छमाना सीता न दृष्टेति । किम्भूता ? 'कृतचरणनतिः' विहितपादवन्दना । पुनः किम्भूता ? 'स्मेरवक्त्रारविन्दा' महासमुखकमला । यत एवंविधाऽपि सीता ताभिर्न दृष्टा अतः कारणाल्लोकैस्तासां नयनत्वलक्षणो धर्मो निश्चितः निष्फल इति । करुणरसः ॥ ४६ ॥

[ बालबोधिनी ]

श्वश्रूणामिति। स 'दानवारि' असुररिपू 'राम 'व'' युष्माक 'दुरित' अनिष्ट चिर दहतु। स क ? 'सद्भि' सत्पुरुषै तत 'साधु' समीचीन 'न मेने' न स्वीकृत 'श्वश्रूणा' कौशल्या कैकयी सुमित्राणा 'अश्रपूरा तरितनयनता' अश्रुसमूहै अन्तर्हितनेत्रत्वम्। तत् कस्मात् ?, 'यस्मात्' कारणात् 'ताभि' श्वश्रूभि 'येन' रामेण 'सार्द्ध' सह विषममपि वन 'प्रयातु' गन्तु 'स्मेरवक्त्रारविन्दा' ईषद्धास्ययुक्त मुखकमळ यस्या सा। ईषद्धासयुक्ता सती 'वैदेही' सीता 'न आलोके' न दृष्टा अत कारणात् सद्भि साधु न मेने। किंलक्षणा वैदेही ? 'तदानीं' तस्मिन्नवसरे 'कृतचरणनति' विहित श्वश्रूणा पादेषु नमस्कारो यया सा कृतचरणनति सती 'तूर्ण' वेगेन 'आपृच्छमाना' सर्वान् इष्टवर्गान् 'अह गच्छामि' इति पृच्छन्ती ॥ ४६ ॥

*

**कौशल्यायां सशल्यः, पितरि परवशे प्राप्तखेदः, समृद्धौ**
**बद्धावज्ञः, कलत्रेऽप्यनुजिगमिषति प्रेषितभ्रूनिमेषः।**
**कैकेय्यामप्रचेताः, समधिगतमहामत्सरो मन्थरायां,**
**सौमित्रिर्यत्र भक्तो विपिनमनुययौ भुक्तिदो वः स भूयात्॥४७॥**

[ हृदयरञ्जनी ]

**कौशल्यायामिति**। स राम 'व' युष्माक 'भुक्तिदो भूयात्' इष्टभोगप्रदो भवतु, भुक्ति–भोज्य तत्प्रदोऽस्तु। स क ? 'यत्र' यस्मिन् रामे 'भक्त' भक्तिमान् सेवक 'सौमित्रि' लक्ष्मण विपिनम् 'अनुययौ' राममनु–पश्चात् जगाम। कुतोऽस्य भक्तत्वम् ? तत् प्रतिपादयितु विशिष्यते किंलक्षण सौमित्रि ? कौशल्याया 'सशल्य' शल्येन सह वर्त्तते इति सशल्य, कौशल्या दृष्ट्वा शल्यविद्ध इव जायते। पुन किंलक्षण ? 'परवशे' पराधीने स्यायत्ते 'पितरि' दशरथे 'प्राप्तखेद' पित्राऽनुचितमनुष्ठितमिति खेदवान्। किंलक्षण ? 'समृद्धौ' राज्यसम्पदि 'बद्धावज्ञ' बद्धा अवज्ञा अनादरो येन स, रामेण विना राम विना कीदृग् राज्यमिति निस्पृह। तथा किंलक्षण ? 'अनुजिगमिषति' अनुव्रजितुमिच्छति 'कलत्रे' ऊर्मिलाया 'प्रेषितभ्रूनिमेष' प्रेषित निक्षिप्त भ्रूनिमेषो येन, भ्रूसज्ञया निषिद्धकलत्र इत्यर्थ। पुन किंलक्षण ? कैकेय्याम् 'अप्रचेता'

---

१ रामचन्द्र 'व' पु० ॥ २ भ्रूनिषेध भा ३-४। एतत्पाठानुसारेण बालबोधिन्यां व्याख्याऽस्ति ॥ ३ °त्र सक्तो भा ३-४। एतत्पाठानुसारेण बालबोधिन्यां व्याख्या विद्यते ॥ ४ भुक्तये व भा १-२-३-४। एतत्पाठभेदानुसारेण बालबोधिन्यां व्याख्या वर्त्तते ॥

अप्रसन्नमना कलुषितचित्त । पुन किंलक्षण ? 'मन्थराया' दास्या 'समधिगतमहामत्सर ' समाधिगत –प्राप्त महान्–अधिको मत्सर –क्रोधो यस्य, मन्थराया समुत्पन्नकोप । निर्वेद विषादा ऽसूया ऽमर्षा ऽऽवेगोग्रताना व्यभिचारिभावाना सन्धि , रसाना सङ्करश्च ॥४७॥

[ बालबोधिनी ]

कौशल्येति । स रामो 'व ' युष्माक 'भुक्त्यै ' भोगाय ' भूयात् ' अस्तु । स क ? 'यत्र ' रामे 'सौमित्रि ' सुमित्रापुत्रो लक्ष्मण 'सक्त' ' आसक्त सन् विपिन अनु-पश्चाद् ययौ-गत । किंलक्षण ? कौशल्याया सशल्य । पुन किंलक्षण ? 'परवशे ' कैकेयीवशे 'पितरि ' दशरथे 'प्राप्तखेद' ' 'आप्तदुख । 'समृद्धौ ' गृह–राज्यसमृद्धौ 'बद्धावज्ञ ' बद्धा अवज्ञा–अनादरो येनासौ । अनुजिगमिषति पश्चाद्गमन कर्त्तुमिच्छति ' कलत्रेऽपि ' जायाया मपि 'प्रेषितभ्रूनिषेध ' प्रेरित भ्रुवा निषेधो येनासौ । पुन किंलक्षण ? कैकेय्या ' अप्रचेता ' तत्र मन एव न कृतम् । पुन किंलक्षण ? 'मन्थराया ' दास्या 'समधिगतमहामत्सर' ' सम्यक्प्रकारेण प्राप्त महाक्रोधो यस्यासौ समधिगतमहामत्सर ॥ ४७ ॥

*

**दूरे तिष्ठन्तु सन्तः पशुभिरपि भृशं दुःखितैरश्रु मुक्तं,**
**कासारैरप्यहासैर्गतसितविहगव्रातदम्भादभावि ।**
**उद्यानैरप्यनुद्यद्ध्वनिकपिकतया नूनमन्यूनमौनैः,**
**सञ्जातं याति यस्मिन् वनमवनमनाः सोऽस्तु वः कौस्तुभाङ्कः ॥४८॥**

[ हृदयरञ्जनी ]

**दूरे तिष्ठन्त्विति ।** 'स कौस्तुभाङ्क ' कौस्तुभ –मणि सोऽङ्क –चिह्न यस्य स राम 'व ' युष्माक 'अवनमना ' अवनं–रक्षण तत्र मन –चित्त यस्य स रक्षणतत्परोऽस्तु । स क ? 'यस्मिन् ' रामे 'वनम् ' अरण्यं 'याति ' गच्छति सति 'पशुभिरपि ' मृगादिभिरपि प्राणिभिर्दुःखितै सद्भि 'अश्रु ' बाष्प नेत्रजल 'मुक्तं ' अरोदि, 'सन्त ' सत्पुरुषा दूरे तिष्ठन्तु, सद्भि –ज्ञानिभि सुखदुःखाभिज्ञै अरोदीत्यत्र का कथा ? का वार्ता ?, *यत्र पशूना दुःखं जात [ तत्र ] मनुष्याणा सदसद्विवेकिना जातमिति किं वक्तव्यम् ?* । अन्यगतदुःखेन अन्यत्र दुःखोत्पत्तिरित्यसङ्गतिरलङ्कार विषमालङ्कारश्च ।

तदिति चतुर्धा विषमं यत्राण्वपि नैव गुर्वपि च कार्यात् ।
कार्यं कुर्यात् कर्ता हीनोऽपि तथै( ? न वा )ऽधिकोऽपि न वा ॥ [ ]

---

१ °सन्नेद्र भा ॥ २ नूनमापन्नमौनै भा १-२ ॥

तथा 'कासारे' तडागै 'अट्टासै' हासशून्यैरभानि, तडागैर्हास त्यक्त। कस्मात्? 'गतसितविहगव्रातदम्भाद्' गताश्च ते सितविहगा–हंसास्तेषां व्रात–समूह तस्य दम्भाद्–व्याजात्, कासारेभ्यो हंसैर्न गत किन्तु हास्य दु खवशात् त्यक्तम्। 'उद्यानैरपि' उपवनैरपि 'अन्यूनमौनै' अन्यूनम्–अधिक मौन येषा तानि अन्यूनमौनानि, तै बद्धमौनै रभावि मूकै सद्भि 'सञ्जात' स्थितम्। कया? 'अनुद्यद्ध्वनिकपिकतया' ध्वनिरेव ध्वनिक, स्वार्थे कप्रत्यय, अनुद्यन् ध्वनिर्येषा ते अनुद्यद्ध्वनय पिका येषु तानि तेषा भाव तत्ता तया, नि शब्दपिकत्वेन दु खितानि तूष्णी तिष्ठन्ति, जाति सद्भि पशुभि कासारैरुद्यानैस्तत्तद्धर्मपरित्यागाद् दु खितैरभावीति वाक्यार्थ। अत्र क्रियादीपक अलङ्कार अनुप्रास, प्रसादो गुण, करुणरस, वैदर्भी रीति। यथा—

श्रुतिमात्रेण शब्दाना येनार्थप्रत्ययो भवेत्।
साधारण समग्राणा स प्रासादो गुण स्मृत ॥

'समग्राणामिति' सर्वासा रीतीनाम् ॥ ४८ ॥

## [ बालबोधिनी ]

दूरे तिष्ठन्त्विति। स 'कौस्तुभाङ्क' राम 'व' युष्मान् 'अवनमना' रक्षणचेता अस्तु। स क? यस्मिन् वन याति सति सन्ता दूर तिष्ठतु पशुभिरपि 'भृश' अत्यर्थं 'दु खितै' दु खयुक्तै 'अश्रु' बाष्प मुक्तम्। पुन स क? यस्मिन् वन याति सति 'कासारै' तडागैरपि 'गतसितविहगव्रातदम्भाद' गत शुक्लपक्षाणां–हसानां व्रात–समूह तच्छलात्–तन्मिषाद् 'अहासै' अहास्ययुक्तै 'अभावि' जातम्, यदा रामो वन गतस्तदा तडागस्था हसा, मानसे गता अत अहासै अभवि। पुन स क? यस्मिन् वन याति सति 'उद्यानैरपि' वाटिकाभिरपि 'नून निश्चित अनुद्यद्ध्वनिकपिकतया कृत्वा 'अन्यून मौन' पूर्णमौनै सञ्जातम्। न उद्यद् अनुद्यत्, तच्च ध्वनि–शब्दश्च अनुद्यद् ध्वनि, अनुद्यद्ध्वनय पिका कोकिला 'येषु उद्यानेषु त अनुद्यद्ध्वनिकपिका तेषा भाव अनुद्यद्ध्वनिकपिकता तया ॥ ४८ ॥

ऐश्वर्ये वंशलक्ष्म्याः प्रसभमपहृते केकयाधीशपुत्र्या,
त स्मृत्वा भर्तृदत्त वरमवरमतेर्मन्थरायाः कथाभिः।
यस्तद्भेऽन्यथापि प्रतिदिनमचलोत्पन्नया सेव्यमानः,
पश्यन् भक्ति गुहस्य प्रकटजटशिरा, सोऽस्तु शौरिः श्रिये वः॥४९॥

[ हृदयरङ्गनी ]

ऐश्वर्ये वंशलक्ष्म्याः इति। 'स शौरि व श्रियेऽस्तु' शूरस्य—वसुदेवस्य अपत्य 'शौरि' श्रीवासुदेव 'व' युष्माक 'श्रिये' लक्ष्म्यै 'अस्तु' भवतु। किंलक्षण शौरि? 'प्रकटजटशिरा' प्रकटा—दृश्यमाना जटा यस्मिन् तत् प्रकटजटम्, प्रकटजटं शिरो यस्य स 'प्रकटजटशिरा' जटावान्। स क? 'य' राम 'तद्' ऐश्वर्यं 'अन्यथा' प्रकारान्तरेण 'लेभे' प्राप्तवान्। क सति? [ 'केकयाधीशपुत्र्या' ] कैकेय्या मध्यममात्रा 'प्रसभ' बलाद् वंशलक्ष्म्या 'ऐश्वर्ये' समृद्धि(? द्धौ) अपहृते सति। किं कृत्वा अपहृते सति? 'अवमते' नीचमते मन्थराया कथामि भर्तृदत्त वर स्मृत्वा। कथ कया रीत्या प्राप? इत्याह—प्रतिदिनं 'अचलोत्पन्नया' सीतया लक्ष्म्या 'सेव्यमान' आराध्यमान। पुन किं कुर्वन्? 'गुहस्य' निषादाधिपते 'भक्ति' सेवा पश्यन्, यद्यपि असौ राज्यलक्ष्मीं जहौ तथापि एव सा लक्ष्मी सीताव्याजेन आ[ ]।

विना कारणसद्भाव यत्र कार्यस्य दर्शनम्।
नैसर्गिकगुणोत्कर्षभावना सा विभावना इति ॥ ४० ॥

[ बालबोधिनी ]

ऐश्वर्ये वंशेति। 'स' राम 'व' युष्माक 'श्रिये' लक्ष्म्यै अस्तु। किंलक्षण? 'प्रकटजटशिरा' प्रकटा जटा यस्मिन् तत् प्रकटजट तत् शिर—मस्तक यस्यासौ। स क? 'य' राम 'तद्' ऐश्वर्यस्वामित्व 'अन्यथाऽपि' प्रकारान्तरेणापि 'लेभे' प्राप्तवान्। किं कुर्वाण? 'प्रतिदिन' दिन दिन प्रति 'अचलोत्पन्नया' सीतया सेव्यमान। किं कुर्वन्? 'गुहस्य' निषादस्य 'भक्ति' सेवां पश्यन्। क सति? 'केकयाधीशपुत्र्या' कैकेय्या 'वंशलक्ष्म्या' राज्यश्रिय 'ऐश्वर्ये' स्वामित्वे 'प्रसभ' बलात्कारेण 'अपहृते सति' गृहीते सति। किं कृत्वा? 'अवमते' निकृष्टमतेर्मन्थराया दास्या 'कथामि' वार्ताभि तं 'भर्तृदत्त' दशरथेन दत्त वर स्मृत्वा ॥ ४९ ॥

•

श्रीवत्सः कृत्रिमं यः शमयतु तमसार्तीरनीरोक्षिताङ्गः,
कुर्वाणः सर्वमुर्वीजनमपि तमसा व्याकुल विप्रयोगात्।
सम्प्राप्तस्याथ यस्य प्रतिभयनभवत्सोमयागे प्रयागे,
कान्ता तासां नदीनां समजनि तिसृणां मङ्गलार्थं चतुर्थी ॥ ५० ॥

१ दुर्मतिकमरि मा १ ॥

## [ हृदयरञ्जनी ]

**श्रीवत्सः कुत्सित**मिति । स 'श्रीवत्स' राम विष्णु 'व' युष्माकं पापं 'शमयतु' स्फेटयतु । किंलक्षण ? 'तमसातीरनीरोक्षिताङ्ग' तमसाया नद्या तीरनीर-जलं तेन उक्षित-सिक्त अङ्ग-शरीर यस्य स, तमसाजले कृतस्नान इत्यर्थ । किं कुर्वन् ? 'विप्रयोगाद्' विरहात् 'सर्वमुर्वीजन' सकल भूलोक व्याकुल 'तमसा' मोहेन 'दुर्मनस कुर्वन् उत्सुक विदधान । स क ? 'यस्य' रामस्य 'कान्ता' जानकी त्रैलोक्यजननी प्रयागे ['तासा तिसृणा] नदीना' गङ्गा-यमुना सरस्वतीना चतुर्थी 'समजनि' सम्पन्ना, सीताया अपि तीर्थरूपत्वात् । उत्प्रेक्षते—'मङ्गलार्थमिव' तिसृणा नाम मङ्गल भवति अत एतासा मध्ये स्वय चतुर्थी जाता । 'पुण्यश्लोका च वैदेही' इति स्मरणात् ।

अहल्या द्रौपदी सीता तारा मन्दोदरी तथा ।
पञ्च कन्या स्मरेन्नित्य महापातकनाशनम् ॥

इति स्मरणाच्चेति तीर्थरूपत्वम् । किंलक्षणे प्रयागे ? 'प्रतिभवनभवत्सोमयागे' भवन भवनं प्रति प्रतिभवन सोमयागो यस्मिन् तत्र, प्रयागे प्रतिसदन सोमयाजी वर्त्तते इत्यर्थ । किम्भूतस्य रामस्य ? प्रयाग प्राप्तस्य, प्रयागशब्दस्य विभक्तिव्यत्ययेन पुन प्रयोग । उत्प्रेक्षा ॥ ५० ॥

## [ बालबोधिनी ]

**श्रीवत्स कुत्सित**मिति । स 'श्रीवत्स' राम 'व' युष्माकं 'कुत्सित' दुरित 'शमयतु' शान्ति प्रापयतु । किं कुर्वाण ? सर्वमपि 'उर्वीजन' पृथिवीलोक 'विप्रयोगाद्' वियोगात् 'तमसा' दु खेन कृत्वा 'व्याकुल' व्यग्र कुर्वाण । किंलक्षण ? 'तमसातीरनीरोक्षिताङ्ग' तमसाया तीर तमसातीरम्, तमसातीरस्य नीर-उदक तस्मिन् उक्षित-प्रक्षालित अङ्ग-गात्र येनासौ । स क ? 'यस्य' रामस्य 'कान्ता' सीता 'तासा तिसृणा नदीना' गङ्गा यमुना सरस्वतीना मध्ये मङ्गलार्थं चतुर्थी 'समजनि' बभूव । किंलक्षणस्य यस्य ? अथ प्रयागे सम्प्राप्तस्य । किंलक्षणे प्रयागे ? 'प्रतिभवनभवत्सोमयाग' गृहं गृहं प्रति भवन्त सोमयागा यस्मिन् स प्रतिभवनभवत्सोमयाग तस्मिन् ॥ ५० ॥

*

**रामः क्षेमं क्रियाद् वः प्रतिपदमपि यत्पादुकोपास्तियत्ना-**
**पन्नैनेकाग्रपिण्डाशनकृशतनुना माण्डवीवल्लभेन ।**

---

१ प्रतिदिनमपि ग १ ३ ४ । एतत्पाठानुसारेण बालबोधिन्यां व्याख्या वर्तते ॥ २ माण्डवी' भा १ २ ३ ४, एष एव पाठ समीचीन, एतत्पाठानुसारेण बालबोधिन्यां व्याख्याऽस्ति ॥

**तन्मेध्यत्वं धरायां समधिगतमसावश्वमेधः स्वमातु-**
**र्येनासीद् दुष्टदासीकथितपथगतब्रह्महत्यां दधत्याः ॥ ५१ ॥**

[ हृदयरञ्जनी ]

**रामः क्षेममिति** । स रामो 'व' युष्माकं क्षेमं क्रियात् । स कः ? येन 'माडवीवल्लभेन' केनचिद्राजा ऋषिणा वा 'तन्मध्यं समधिगतं' तन्मध्यं–राममध्यं रामान्त-पातिना जातम्, तत्र लीनमित्यर्थः । किम्भूतेन ? 'प्रतिपदमपि' पदे पदे 'यत्पादुकोपास्तियत्नापन्नेन' यस्य रामस्य पादुके तयोरुपास्ति—उपासना सेवा तस्या यत्न–प्रयत्न. प्रयतनं आपन्नेन–प्राप्तेन, "प्राप्तापन्ने च०" [ पाणिनि० २-२-४ ] इति द्वितीया-समास. । पुन किंलक्षणेन ? 'एकान्नपिण्डाशनकृशतनुना' एकश्चासौ अन्नपिण्डश्च वा एकं च तद् अन्नं च तस्य पिण्ड–कवल तस्य अशनं–भक्षणं तेन कृशा तनु–शरीरं यस्य तेन, 'च' अपरं धराया येन असौ अश्वमेधश्च 'समधिगत' कृतः । किमर्थम् ? 'स्वमातु. कृते' स्वजनन्यर्थे । किंलक्षणाया. स्वमातु. ? 'दुष्टदासीकथितपथगतब्रह्महत्या दधत्या' दुष्टा या दासी तया कथितपथ–वचनमार्ग तेन गता ब्रह्महत्या ता दधत्या, कार्या-ऽकार्यानभिज्ञचेटीवचनानुरोधेन समधिगतं ब्रह्मानन्नं(?) धारयन्त्या । अयमर्थ.–यो माडवीवल्लभ स्वमातु ब्रह्महत्यापनोदार्थे अश्वमेधाख्यं यागमनुष्ठितवान् । तथा च **श्रुतिः**–"तरति ब्रह्महत्या योऽश्वमेधेन यजते" [ ] इति ॥ ५१ ॥

[बालबोधिनी]

**रामः क्षेमं क्रियेति** । स रामः 'व' युष्माक 'क्षेमं' कल्याण 'क्रियात्' करोतु । कीदृशः सः ? येन 'माण्डवीवल्लभेन' भरतेनानुजेन भ्रात्रा प्रतिदिनमपि 'यत्पादुकोपास्तियत्नात्' यस्य-रामस्य पादुकाया. उपासनप्रयत्नाद् 'धराया' पृथिव्या यद् 'मेध्यत्व' पावित्र्य 'समधिगत' आप्त 'तत्' पावित्र्य 'स्वमातु' कैकेय्या असौ अश्वमेध आसित् । कीदृश्या. स्वमातुः ? 'येन' कारणेन 'दुष्टदासीकथितपथिगतिब्रह्महत्यां दधत्या' दोषयुक्तदास्युक्तमार्ग-गमनेन ब्रह्महत्या बिभ्रत्याः । कीदृशेन माण्डवीवल्लभेन ? 'एकान्नपिण्डाशनकृशतनुना' एको यो अन्नस्य पिण्ड तस्य भक्षणेन दुर्बलशरीरेण ॥ ५१ ॥

*

**भारत्या सन्मुनीनां मुहुरमृतमुचा स्तोकयन् तातशोकं**
**भारत्या भक्तिमत्या वचनरचनया दत्तचित्तप्रसादः ।**

---

१ °पथिगतिब्र° भा १ ३-४ । एतत्पाठानुसारेण बालबोधिन्या व्याख्या विद्यते ॥ २ अप-व्याख्यानमिदम् । अत्रार्थे 'माण्डवीवल्लभेन–भरतेन' इति बालबोधिनीव्याख्यानमेव सुसङ्गतम् ॥ ३ °चा मोचयस्तात' भा १ ॥

कान्तारार्तिं विराधं प्रधनभुवि नयन्नाशुगैराशु नाशं,
कान्ताराभ्यागतो वः स भवतु भगवान् भोगसंयोगकर्ता॥५२॥

[ हृदयरञ्जनी ]

भारत्येति। 'स भगवान्' राम 'व' युष्माक 'भोगसंयोगकर्त्ता भवतु' [भोग—] स्रक्-चन्दन-वनितादिलक्षण तस्य सयोग—सम्बन्ध उत्पत्ति तस्य कर्त्ता—निमित्तकारण भवतु। किंलक्षण राम? 'कान्तार—दुर्गम वर्त्म [तत] अभ्यागत—आभिमुख्येन सम्मुखत्वेन प्राप्त। किंकुर्वन्? 'सन्मुनीनां' सन्तश्च ते मुनयश्च तेषा महात्मना 'अमृतमुचा' पीयूषश्राविण्या 'भारत्या' वाण्या 'तातशोक' जनकाधिपतिश्रवणजनितदुःख 'स्तोक्यन्' अल्पीकुर्वन् विस्मरन्, सन्मुनीना 'मुहु' वार वार प्रबोधवचनेन शान्तदुःखो जात इत्यर्थ। चान्यत् किंलक्षण? 'दत्तचित्तप्रसाद' दत्त चित्तप्रसादो यस्मै, निर्मलीकृतचेता इत्यर्थ। कया? 'भारत्या' भरतसम्बन्धिन्या 'वचनरचनया' वचनाना रचनया वचनपरिपाट्या। किंलक्षणया? 'भक्तिमत्या' भक्तिरस्यामस्तीति भक्तिमती तया, अकृत्रिमादरातिशयप्रकाशिन्या भ्रातृभरतवचनरीत्या प्रसन्नचेता इति। पुन किंकुर्वन्? 'प्रधनभुवि' रणभूमौ 'आशुगै' बाणे, आशु—शीघ्र गच्छन्तीत्याशुगा ते 'आशु' शीघ्र विराध नाम राक्षस 'नाश नयन्' क्षय कुर्वन्। किंलक्षण विराधम्? 'कान्तारार्तिं' कान्ताया अराति—शत्रु तम्, राम-लक्ष्मणयोर्मध्यवर्तिनीं सीतामपहृत्य विद्रु(? वियत्सु)-त्पतन्त राक्षसं रामो जघानेति वाक्यार्थ। निर्वे[द]-धृत्यमर्षाणा भावाना सन्धि, शान्त वीरयोर्विरोधिनो सङ्कर ॥५२॥

[ बालबोधिनी ]

भारत्या सन्निति। 'स भगवान्' राम 'व' युष्माक 'भोगसयोगकर्त्ता भवतु' भोगस्य सयोग तस्य कर्त्ता अस्तु। कीदृश? 'कान्ताराभ्यागत' वनातिथि। किं कुर्वाण? 'प्रधनभुवि' सङ्ग्रामाङ्गणे 'कान्तारार्तिं' वनितारिपु 'विराध' राक्षस 'आशुगै' बाणे 'आशु' शीघ्र 'नाश नयन्' नाश प्रापयन्। कीदृश? 'सन्मुनीनां' साधुऋषीणां 'भारत्या' वाण्या 'तातशोक' पितृशोक 'स्तोकयन्' अल्पीकुर्वन्। कीदृश्या भारत्या? 'मुहु' वार वार 'अमृतमुचा' अमृत मुञ्चतीत्यमृतमुक् तया। पुन कीदृश? 'भारत्या' सरस्वत्या वचनरचनया कृत्वा 'दत्तचित्तप्रसाद' दत्त चित्तस्य प्रसादो यस्मै स तादृक्। कीदृश्या भारत्या? भक्तिमत्या भक्तियुक्तया ॥५२॥

१ कुर्वन्? पु०॥

वैचित्र्यं चित्रकूटे कटकविटपिनामीक्षमाणः समक्षं,
लक्ष्म्याः सीताभिधायाः स धुरि धनवतां श्रीधरो वः करोतु।
कैकेयी तं सुवित्वा सुतमतनुगुणं यं च कृत्वा विभूति-
भ्रष्टं शुक्लाष्टमीव स्फुटमजनि जने सप्रकाशाऽप्रकाशा ॥ ५३ ॥

## [ हृदयरञ्जनी ]

वैचित्र्यमिति। 'स श्रीधरः' श्रीभर्ता रामावतारः 'व' युष्मान् 'धनवतां' लक्ष्मीवतां 'धुरि' प्रथमं 'करोतु' मुख्यं विदध्यादिति। किंकुर्वाणः? 'सीताभिधायाः' सीतेति अभिधा—नाम यस्या सा तस्या लक्ष्म्या 'समक्षं' सन्निधाने 'चित्रकूटपर्वते' चित्राणि—नानाप्रकाराणि कूटानि—शिखराणि यस्य तस्मिन् 'कटकविटपिना' कटक—नितम्ब तत्र ये विटपिन—वृक्षास्तेषां वैचित्र्यं-विचित्रता 'ईक्षमाण' पश्यन्। स कः? कैकेयी तं 'अतनुगुणं' अतनव—महान्तो गुणा यस्य तं 'सुतं' भरतं 'सुवित्वा' जनयित्वा 'च' अपरं 'यं' रामं 'विभूतिभ्रष्टं' ऐश्वर्याद् भ्रष्टं-पतितं गतैश्वर्यं कृत्वा 'स्फुटं' प्रकटं यथा भवति तथा 'जने' लोके लोकमध्ये 'सप्रकाशा अप्रकाशा च अजनि' पूर्वं 'सप्रकाशा' भरततनयेन प्रकाशसहिता शोभमाना पश्चाद् ऋद्ध्या रामं वियुज्य ['अप्रकाशा'] अशोभा जाता, पूर्वं स्तुत्या पश्चान्निन्द्याऽऽसीदित्यर्थः। केव? 'शुक्लाष्टमीव' [यथा शुक्लाष्टमी] सप्रकाशाऽप्रकाशा च भवतीति। उपमा ॥ ५३ ॥

## [ बालबोधिनी ]

वैचित्र्यं चित्रकूटे इति। 'स श्रीधरः' रामः 'व' युष्माकं 'धनवतां' आढ्यानां 'धुरि' अग्रगण्यान् करोतु। कीदृश? 'चित्रकूटे' तन्नामनि गिरौ सीताभिधाया लक्ष्म्याः 'समक्ष' प्रत्यक्ष यथा स्यात् तथा 'कटकविटपिना' कटकवृक्षाणा 'वैचित्र्यं' नानाप्रकार-भाव 'ईक्षमाणः' पश्यन्। स कः? 'कैकेयी' दशरथस्य द्वितीया जाया त 'अतनुगुणं' बहुसुगुण 'सुत' पुत्र भरत 'सुवित्वा' प्रसूय 'च' अपरं 'य' राम 'विभूतिभ्रष्ट कृत्वा' राज्यसमृद्धेर्भ्रष्ट कृत्वा 'स्फुट' प्रकट यथा स्यात् तथा 'जने' लोके शुक्लाष्टमीव सप्रकाशा अप्रकाशा च 'अजनि' बभूव, यथा शुक्लाष्टमी जने स्फुटं प्रकटं आ मध्यरात्रे सप्रकाशा ततो यामद्वय अप्रकाशा च जायते तथा कैकेय्यपि भरतजननात् सप्रकाशा बभूव पश्चाद् राम वने गमयती अप्रकाशा बभूव ॥ ५३ ॥

*

१ सवित्वा भा १ २-३-४ ॥

**साङ्गत्यं सज्जनैर्वः स जनयतु दिनाधीशवंशावतंसः,**
**कंसध्वंसी प्रियं यद्वदनसरसिजं लक्ष्मणः प्रेक्षमाणः ।**
**कुण्ठोत्कण्ठः पितर्यप्यजनि जनकजासौहृदय्याज्जनन्या-**
**मप्यासीत् तस्य भक्त्या भवन इव वनेऽप्यूषतुस्तौ सहर्षम् ॥५४॥**

## [ हृदयरञ्जनी ]

साङ्गत्यमिति । 'दिनाधीशवंशावतंसः' सूर्यवंशस्य मुकुटीभूतः 'सः' रामः 'वः' युष्माकं सज्जनैः 'साङ्गत्यं' सान्निध्यं 'जनयतु' उत्पादयतु । [ स कः ? ] 'कंसध्वंसी' स श्रीनारायणः । स कः ? लक्ष्मणः 'प्रियं' वल्लभं सकललोकानां प्रियं 'यद्वदनसरसिजं' यस्य—रामस्य वदनकमलं प्रेक्षमाणः सन् 'पितर्यपि' दशरथेऽपि 'कुण्ठोत्कण्ठः' कुण्ठा—गता उत्कण्ठा—उत्सुकता स्नेहो यस्य स मन्दोत्कण्ठः अजनि, तथा 'जनन्यामपि' मातर्यपि कुण्ठोत्कण्ठोऽजनि । कस्मात् ? 'जनकजासौहृदय्यात्' शोभनं च तद् हृदयं च सुहृदयं तस्य भावः सौहृदय्यम् यण्, जनकजायाः—सीतायाः सौहृदय्यं तस्मात् । 'तावपि' सीता-रामौ 'तस्य भक्त्या' लक्ष्मणसेवया कृत्वा सहर्षं यथा भवति तथा 'भवने' गृहे इव 'वने' अरण्येऽपि 'ऊषतुः' तस्थतुः । परिवृत्तिरलङ्कारः ॥ ५४ ॥

## [ बालबोधिनी ]

साङ्गत्यमिति । 'सः' रामः 'वः' युष्माकं 'सज्जनैः' सत्पुरुषैः समं 'साङ्गत्यं' सङ्गतिभावं 'जनयतु' उत्पादयतु । किंलक्षणः ? 'दिनाधीशवंशावतंसः' सूर्यवंशे मुकुटः । स कः ? लक्ष्मणः 'प्रियं' वल्लभं 'यद्वदनसरसिजं' यस्य—रामस्य मुखपङ्कज 'वीक्षमाणः' पश्यन् सन् 'पितर्यपि' दशरथेऽपि कुण्ठोत्कण्ठः 'अजनि' आसीत्, कुण्ठा-कुण्ठिता उत्कण्ठा यस्य स तादृक् । 'च' पुनः यो लक्ष्मणः 'जनकजासौहृदात्' सीतामित्रभावाद् 'जनन्या-मपि' सुमित्रायामपि कुण्ठोत्कण्ठोऽजनि तस्य भक्त्या कृत्वा 'तौ' सीतारामौ वनेऽपि सहर्षं यथा स्यात् तथा 'भवने इव' गृहे इव 'ऊषतुः' वासं कृतवन्तौ ॥ ५४ ॥

•

**सन्दोहे पादपानां विकिरति कुसुमस्तोममुच्चैः पिकानां,**
**गीते नृत्यं श्रितासु व्रततिषु मरुता कीचकेषु ध्वनत्सु ।**

---

१ भियं भा १ ॥ २ 'णो वीक्ष' भा ३-४ । एतत्पाठानुसारेण बालबोधिन्या व्याख्या वर्तते । ३ 'हृदाद् यो' जन' भा ३-४ । एतत्पाठभेदानुसारेण बालबोधिन्या व्याख्या वर्तते ॥ ४ कीदृशः ? पु० ॥

**सङ्गीतं काननेन प्रथितमिव मुदा यत्र नाथे त्रयाणां,**
**लोकानामभ्युपेते स भवदवभयात् पातु पीताम्बरो वः ॥ ५५ ॥**

[ हृदयरञ्जनी ]

**सन्दोहे** इति। सः 'पीताम्बरः' पीते अम्बरे—वाससी यस्य स पीताम्बरः 'वः' युष्मान् 'पातु' अवतु। कस्मात्? 'भवदवभयाद्' भवः—संसारः स एव दवः—दावाग्निः तस्माद् रक्षत्वित्यर्थः। स इति कः? त्रयाणां लोकानां 'नाथे' स्वामिनि 'यत्र' रामे 'अभ्युपेते सति' आगच्छति सति काननेन सङ्गीतं 'प्रथितं कृतमनुष्ठितमित्युत्प्रेक्षा। कया? 'मुदा' हर्षेण। लोके इयं स्थितिः—महापुरुषे साधौ प्राघूर्णिकतया गृहमागते सति नृत्यादिकं महोत्सवं करोति युक्तमेतत्, गृहिणामेतत् सम्भवति, वनस्याचेतनत्वात् कानने कथं सङ्गीतं सामग्र्यभावात् अनुष्ठितम्? इति "गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते" तदेतत् प्रतिपादयितुमाह—तत्र नृत्यारम्भे प्रथमं पुष्पाञ्जलिर्भवति तत्राह—क सति? पादपानां 'सन्दोहे' समूहे 'कुसुमस्तोमं' पुष्पनिकरं विकिरति सति वृक्षैः पुष्पाञ्जलिः कृतः, अपरं कृति(?) पिकानां सन्दोहे उच्चैः 'गीते सति' गानं कुर्वति सति कोकिलाभिर्गीतमनुष्ठितम्, तथा 'व्रततिषु' वल्लीषु 'नृत्यं श्रितासु सतीषु' नृत्यं—गात्रविक्षेपं अवस्पन्दनं कुर्वतीषु सतीषु, चान्यद् 'मरुता' वायुना 'कीचकेषु ध्वनत्सु' कीचकैर्ध्वनितमिति। एतत्त्रयं काननेन रामे गृहमागते सम्पादितमिति। उत्प्रेक्षालङ्कारः। आर्थिकोऽप्यान्तरन्यासः ॥ ५५ ॥

[ बालबोधिनी ]

**सन्दोहे पाद्**इति। सः 'पीताम्बरः' रामः 'वः' युष्मान् 'भवदवभयात् पातु' भवः—संसारः दवः—दावानल इव तस्मात् भय तस्माद्। स कः? उत्प्रेक्षने—'यत्र' यस्मिन् रामे त्रयाणां लोकाना 'नाथे' स्वामिनि वनमभ्युपेते सति 'काननेन' वनेन 'मुदा' हर्षेण कृत्वा सङ्गीतं 'प्रथितमिव' विस्तृतमिव। क सति? 'पादपानां' वृक्षाणां 'सन्दोहे' समूहे 'कुसुमस्तोम' पुष्पसमूह 'विकिरति' प्रक्षिपति सति। पुनः क सति? 'उच्चैः' उच्चस्वरेण 'पिकाना' कोकिलाना गीते सति। पुन क सतीषु? 'व्रततिषु' वल्लीषु 'मरुना' वायुना कृत्वा नृत्य 'श्रितासु' आश्रितासु। पुनः क सत्सु? मरुता 'कीचकेषु' सच्छिद्रवंशेषु 'ध्वनत्सु' शब्दायमानेषु ॥ ५५ ॥

*

**देयाद् दामोदरो वस्त्रिभुवनविभुतां जानकी येन साकं,**
**मार्गे दुर्गेऽपि यान्ती कमलदलमृदुः क्लिश्यतां सा कथं तु?।**

---

१ नु भा १-२-३-४। एतत्पाठानुसारेण बालबोधिन्यां व्याख्या वर्तते॥

**नित्यं पत्योह्यमाना हृदयविनिहिता प्रेमभारं स्वमुच्चै-**
**स्तस्मिन्नेवादधाना विदधति निभृतं पादसंवाहनं च ॥ ५६ ॥**

[ हृदयरञ्जनी ]

**देयाद् दामोदरो** इति। सः 'दामोदरः' रामः 'वः' युष्माकं 'त्रिभुवनविभुतां' त्रैलोक्याधिपत्यं 'देयाद्' दिश्यात्। स कः? 'येन' रामेण 'साकं' सह 'दुर्गेऽपि' संकटेऽपि मार्गे 'यान्ती' गच्छन्ती जानकी 'तु' पुनः 'कथं खिद्यतां' कथमिव खेदं—श्रान्तिं प्राप्नोतु? न कथमपीत्यर्थः। यतः सा एवंविधा 'पत्या उह्यमाना' पत्या—रामेण उह्यमाना—नीयमाना। पुनः किंलक्षणा? 'हृदयविनिहिता' हृदये आरोप्यमाणा। पुनः किंलक्षणा? 'कमलदलमृदुः' उत्पलपत्रकोमला। पुनः किंलक्षणा? 'तस्मिन्नेव' रामे 'ऊच्चैः' अतिशयं ['स्वं'] स्वकीयं 'प्रेमभारं' स्नेहोत्कर्षं आदधाना, सर्वात्मना तमेव पश्यन्तीत्यर्थः। क सति? 'च' अन्यत् तस्मिन् रामे 'निभृतं' गुप्तं यथा भवति तथा पादसंवाहनं च विदधति सति, श्रान्तायां सत्यां चरणपीडनं कुर्वतीत्यर्थः, अत एवास्याः खेदो मा भूदिति भावः। अनुमानालङ्कारः, अर्थान्तरन्यासोऽपि ॥ ५६ ॥

[ बालबोधिनी ]

**देयाद् दामोदरो** इति। सः 'दामोदरः' रामः 'वः' 'युष्मभ्यं 'त्रिभुवनविभुतां' स्वर्ग-मृत्यु-पातालस्वामित्वं 'देयाद्' ददातु। स कः? 'जानकी' सीता 'येन' रामेण सार्कं 'दुर्गेऽपि' कठिनेऽपि मार्गे 'यान्ती' गच्छन्ती सती 'कमलदलमृदुरपि' कमलदलवत् कोमलाऽपि कथं नु खिद्यताम्? न कथमपि, काकूक्त्या व्याख्येयम्। अत्र सम्भावनायां लोट्। कीदृशी जानकी? 'नित्यं' प्रतिदिनं 'पत्या' रामेण 'हृदयविनिहिता' हृदये आरोपिता सती 'उह्यमाना' नीयमाना। पुनः कीदृशी? 'निभृतं' प्रच्छन्नं यथा स्यात् तथा 'पादसंवाहनां' चरणसेवां 'विदधति' कुर्वति, 'तस्मिन्नेव' पतिविषये श्रीरामे 'स्वं' स्वकीयं 'उच्चैः' बहुलं 'प्रेमभारं' प्रीतिभारं 'आदधाना' मुह्यमाना ॥ ५६ ॥

•

**सावित्रं यत्र तेजः श्रितवति शमिनामाश्रमं[3] चाश्रमं च,**
**प्राप्ते होमाग्निधूमर्च्छलित[4] इव तमोराशिराशु प्रनष्टः।**

---

१ °हनां च भा १-२-३-४ ॥ एतत्पाठानुसारेणैव बालबोधिन्यां व्याख्या वर्तते ॥ २ युष्माकं 'त्रि' भा १-२ ॥ ३ °श्रमादाश्रमं च भा ३-४। °श्रमादाश्रमं च इति पाठानुसारेण बालबोधिन्यां व्याख्यानं दृश्यते ॥ ४ °च्छन्न भा १-२-३-४। एतत्पाठानुसारेण बालबोधिन्यां व्याख्या वर्तते ॥

निष्कर्माः कर्म चक्रुः किमपि यदपयस्तत्फलं तेषु यच्छ-
न्नालोकादेव देवः स दिशतु सुदशामीश्वरांशः स्थिरां वः ॥ ५७ ॥

[ हृदयरञ्जनी ]

**सावित्रं चेति** । स ईश्वरांशो देवः स्थिरां सुदशां 'दिशतु' यच्छतु 'वः' युष्माकम् । दशामिति पुत्रपौत्रादिसम्पदुपेतामवस्थामिति । स कः ? 'शमिनां' शमो विद्यते येषां ते शमिनः [ तेषां ] शमवतां मुनीनां 'तमोराशिः' तमः–अज्ञानं तस्य राशिरिव राशिः–पुञ्जः समूहः 'प्रनष्टः' प्रकर्षेण नष्टः–गतः । क्व सति ? 'यत्र' यस्मिन् रामे ऽश्रममाश्रमं प्राप्ते सति । किंलक्षणे रामे ? 'सावित्रं' सवितुरिदं सावित्रं–सूर्यसम्बन्धि तेजः श्रितवति, यथा सूर्यतेजसि आश्रमं प्राप्ते सति तमोराशिः नश्यति तद्वदित्यर्थः । उपमा । उत्प्रेक्ष्यते–किंलक्षणोऽन्धकारराशिः ? 'होमाग्निधूमच्छलित इव' होमाग्निधूमेन च्छलितः–नाशितः ज्ञायत इति ऋषीणां गृहिणां च होमधूमसम्पर्केण पापराशियाति, यथा लोके धूमें छलितो व्याप्तो जनः पलाय्य गच्छति तद्वदिति । किं कुर्वन् ? ऋषयः निष्कर्मा मन्तः ब्रह्मनिष्ठाः मुमुक्षवः ब्रह्मार्पणबुधा यत् 'कर्म' यागादि सन्ध्यावन्दनादि जपादि यत् कर्म चक्रुः मोक्षप्राप्त्यर्थे तेषु ऋषिषु 'तत्फलं' मोक्षलक्षणं फलं यच्छन् । कस्मात् ? 'आलोकादेव' दर्शनमात्रादेव मुनीनामभवदिति तात्पर्यार्थः । उपमोत्प्रेक्षाऽलङ्कारौ । अनुप्रासः । वैदर्भी रीतिः । माधुर्यं गुणः । यथा माधुर्यलक्षणम्–

"मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥" ॥ ५७ ॥

[ बालबोधिनी ]

**सावित्रं यत्रेति** । स ईश्वरांशः [ 'देवः' ] रामः 'वः' [3]युष्माकं 'स्थिरां' निश्चलां 'सुदशां' शोभनावस्थां 'दिशतु' ददातु । किं कुर्वन् ? 'ऋषयः' वनस्था मुनयः 'निष्कामाः' स्वर्गकामादिवाञ्छनारहिताः सन्तः 'यत् किमपि' श्रौतं स्मार्त्तं च कर्म चक्रुः तेषु ऋषिषु 'तत्फलं' तस्य–कर्मणः फलं 'आलोकादेव' दर्शनमात्रादेव 'यच्छन्' प्रयच्छन्, यतः स्वर्गादिकामनारहितस्य कर्मणः रामदर्शनमेव प्रयोजनं तच्च जातम् । स कः ? 'यत्र' यस्मिन् 'सावित्रं' सवितुः सम्बन्धि तेजः 'श्रितवति' आश्रितवति श्रीरामे 'शमिनां' ऋषीणां 'अश्रमम्' अश्रमादाश्रमं प्राप्ते सति । उत्प्रेक्षते— होमाग्निधूमच्छलतः ' होमवह्निधूमभिषाद् 'आशु' शीघ्रं 'तमोराशिः' पापसमूहः 'प्रनष्ट इव' गत इव ॥ ५७ ॥

१ निष्कामाः कर्म भा १२-३-४ । एतत्पाठानुसारेणैव बालबोधिन्यां व्याख्यातोऽस्ति ॥ २ सुदिशां भा २ ॥ ३ युष्मभ्यं स्थिरां पु० ॥

सव्याघ्रां व्याघ्रतुल्यो घनवनमहिषां यः प्रहृष्यन् महिष्या,
शैलोत्तुङ्गः सशैलां मदनमयवयाः सेव्यमानां वयोभिः ।
सद्वृक्षां कल्पवृक्षप्रतिकृतिरविशद् दण्डकारण्यभूमिं,
कोदण्डोद्दण्डबाहुर्बहुभिरभिमतैः सोऽन्वितान् वः करोतु ॥ ५८ ॥

[ हृदयरञ्जनी ]

**सव्याघ्रा**मिति । 'स' राम 'व' युष्मान् 'बहुभि' अनेकै 'अभिमतै' वल्लभपदार्थैरन्वितान् करोतु । स क ? 'य' राम दण्डकारण्यभूमिं अविशत् । किम्भूता दण्डकारण्यभूमिम् ? किंलक्षण राम ? उभयो शब्दसाम्यात् श्लेषालङ्कारेणाऽऽह— किंलक्षणा भूमिम् ? [ 'सव्याघ्रा' व्याघ्रसहिताम् । किंलक्षणो राम ? 'व्याघ्रतुल्य' व्याघ्र सम । पुन किंलक्षणा भूमिम् ? ] 'घनवनमहिषा' घना –अनेके वनमहिषा –गवया यस्या सा ताम् । किंलक्षणो राम ? 'महिष्या' कृताभिषेकया सीतया 'प्रहृष्यन्' सन्तुष्यमाण, "कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रिय" **इत्यमरः** [का० २ मनुष्यवर्ग श्लो० ५] । पुन किंलक्षणाम् ? 'सशैला' पर्वतसहिताम् । किंलक्षणो राम ? 'शैलोत्तुङ्ग' शैलप्रांशु सारवाश्च । पुन किंलक्षण राम ? 'मदनमयवया' मदनप्राचुर्येण प्रस्तुतोऽत्र मदनमयं वयो यस्य स मदनमयवया, तरुण इत्यर्थ । किंलक्षणां भूमिम् ? 'वयोभि' पक्षिभि 'सेव्यमाना' पक्षियुक्ताम् । पुन किंलक्षणाम् ? 'सवृक्षा' वृक्षै सह वर्त्तते विटपिमतीम् । किंलक्षणो राम ? 'कल्पवृक्षप्रतिकृति' कल्पवृक्षस्य प्रतिनिधि, वा कल्पवृक्ष प्रतिकृति– प्रतिनिधिरन्यो यस्य स । किंविधो राम ? 'कोदण्डोद्दण्डबाहु' कोदण्डेन–धनुषा उद्दण्डौ–भीषणौ बाहू–भुजौ यस्य । एवलक्षणो राम एवम्भूतामटवीमटन् व पूर्णमनोरथान् करोतु इत्याशी ॥ ५८ ॥

[ बालबोधिनी ]

सव्याघ्रा व्याघ्रेति । स राम 'व' युष्मान् बहुभि 'अभिमतै' वाञ्छितै 'अन्वितान्' युक्तान् करोतु । स क ? 'य' राम 'दण्डकारण्यभूमिमविशद्' दण्डवद् दीर्घं अरण्य–वन दण्डकारण्य त सम्बन्धिनी भूमि तां प्राविशत् । कीदृश ? 'कोदण्डोद्दण्डबाहु' कोदण्डवत्–चापवद् उद्दण्डौ–महान्तौ बाहू–हस्तौ यस्यासौ तादृश । समासेनापि राम दण्डकारण्ययो साम्य उच्यते । कीदृशीं दण्डकारण्यभूमिम् ? 'सव्याघ्रां' सहविद्यमाना व्याघ्रा यस्यां सा ताम् । कीदृशो राम ? 'व्याघ्रतुल्य' व्याघ्रेण सम । कीदृशीम् ? 'घनवनमहिषां' वनस्य महिषा वनमहिषा, घना –बहवो वनमहिषा यस्यां सा ताम् । राम,

'महिष्या' प्रथमपरिणीतया सीतया कृत्वा 'प्रहृष्यन्' 'हर्षयुक्तो वर्त्तते। 'सशैलां' सह विद्यमाना शैला -पर्वता यस्याम् । 'शैलोत्तुङ्ग' शैलवद् उत्तुङ्ग -उच्च । किंलक्षणाम्' 'वयोभि' पक्षिभि सेव्यमानाम्। 'मदनमयवया' मदनमय-कन्दर्पमय वय -यौवन यस्यासौ मदनमयवया । 'सद्वृक्षा' स त -साधव विद्यमाना वा वृक्षा यस्यां सा ताम् । कीदृश ? 'कल्पवृक्षप्रतिकृति' कल्पवृक्षवत् प्रतिकृति -स्वभावो यस्यासौ कल्पवृक्षप्रतिकृति ॥५८॥

*

**श्रीकान्तः पातु युष्मानुपितमधुकरस्मेरपुष्पेक्षणाभिः,**
**कान्तारे प्रेक्ष्यमाणो व्रततियुवतिभिर्निश्चलं विस्मिताभिः।**
**गङ्गामित्रैश्चरित्रैः प्रमुदितहृदया साऽत्रिनारी व्यतारी-**
**न्मैथिल्यामङ्गरागं त्रिभुवनसुभगोऽनङ्गरागं पुनर्यः ॥ ५९ ॥**

[ हृदयरञ्जनी ]

**श्रीकान्तः** इति। 'श्रीकान्त' लक्ष्मीकान्त 'व' युष्मान् 'पातु' रक्षतु। किम्भूतो राम ? 'कान्तारे' दण्डकारण्ये 'व्रततियुवतिभि' व्रतत्य एव युवतय -अङ्गना ताभि निश्चल यथा भवति तथा 'प्रेक्ष्यमाण' विलोक्यमान । किंविधाभिर्युवतिभि ? 'उपितमधुकरस्मेर पुष्पेक्षणाभि' उपिता -उपविष्टा मधुकरा -भ्रमरा येषु तानि उपितमधुकराणि, [स्मेराणि-] विकसितानि यानि पुष्पाणि, कर्मधारय, तान्येव ईक्षणानि-लोचनानि यासा ताभि । पुन किम्भूताभि ? 'विस्मिताभि' विकसिताभि । स क ? 'य' राम 'यस्या' सीताया 'अनङ्गराग व्यतारीद्' कन्दर्पानुराग विस्तारयति स्म । सा 'अत्रिनारी' अनसूया तस्या 'मैथिल्या' सीताया 'अङ्गराग व्यतारीद्' अङ्गे अङ्गराग लिम्पति स्म। किम्भूता अत्रिनारी ? 'गङ्गामित्रै' गङ्गावत् पवित्रै चरित्रै -आचारै 'प्रमुदितहृदया' हृष्टचित्ता, राम सीत योरिति शेष यस्या अङ्गराग अनसूया जनयति स्म, रामस्तस्या अनङ्गराग जनयति स्मेति विरोध, परिहारस्तु-एकत्राङ्गरागोऽनुलेपनविशेष, अपरत्र मदनातुरा इति। किम्भूतो राम ? 'त्रिभुवनसुभग' त्रैलोक्यसुन्दरो रमणीय, अङ्गरागोऽपि तादृश विभक्तिव्यत्ययेन योज्यम्। प्रथमार्द्धे रूपकोपमा।

"उपमैव तिरोभूतभेदा रूपकमिष्यते।"

व्रतति-युवतयोरभेदत्वादुत्तरार्द्धे विरोधाभास ॥ ५९ ॥

[बालबोधिनी]

**श्रीकान्त** पात्विति। स श्रीका त' राम व' युष्मान् पातु। कीदृशो राम ? 'का तारे

१ हृष्टो व पु० ॥ २ निश्चित भा १ २ ३ ४। एतत्पाठानुसारेण बालबोधिन्यां व्याख्या वर्तते ॥

वने 'व्रततियुवतिभि ' वल्लय एव युवतय -स्त्रिय ताभि ' निश्चित ' अवश्य 'गिरिमताभि ' आश्चर्ययुक्ताभि 'प्रेक्ष्यमाण ' दृश्यमान । कीदृशाभि ताभि ? 'उपितमधुकरस्मेरपुष्प क्षणाभि ' उपविष्टमधुकराणि स्मेराणि पुष्पाण्येव ईक्षणानि यासा तास्तथा ताभि । स क ? सा 'अत्रिदारा ' अनसूया 'मैथिल्या ' सीताया 'अङ्गराग ' अङ्गेषु राग अङ्गराग त 'व्यतारीत् ' चकार । पुनर्यो राम मैथिल्या 'अनङ्गराग ' क-दर्पराग 'व्यतारीत् ' चकार। कीदृशी अत्रिदारा ? 'गङ्गामित्रैश्चरित्रै प्रमुदितहृदया ' गङ्गोदकवत् [ पवित्रै ] चरित्रै -आच रणै कृत्वा हृष्टचित्ता । कीदृशो राम ? 'त्रिभुवनसुभग ' त्रीणि भुवनानि त्रिभुवन तस्मिन् सुभग -सुन्दर ॥ ५९ ॥

*

देवः स्वच्छस्वभावो ह्रद इव सरितः शूलिमौलिस्थितायाः
सीतामङ्के दधानः स्फुटितपुटकिनीवक्त्रसौभाग्यभाजम् ।
हसेनेवानुजेन क्षणमपि नपरित्यक्तपार्श्वश्च युष्मत्-
तृष्णां मुष्णातु कुम्भोद्भवमुनिभवनात् पञ्चवट्यां निविष्टः ॥६०॥

[ हृदयरञ्जनी ]

देव इति । 'देव ' स राम युष्मत्तृष्णा 'मुष्णातु ' अपहरतु । क इव ' 'शूलिमौलिस्थिताया सरित ह्रद इव' यथा गङ्गाप्रवाह तृष्णा-पिपासा हरति तथेति । शूलमस्यास्तीति शूली ' अत इनि-ठनौ " [ पाणिनि० ५-२-११५ ] इति इन्, श्रीमहादेव, तस्य मौलि -मस्तक तत्र स्थिता तस्या, 'सरित ' गङ्गाया 'ह्रद ' निश्चलोदकावस्थानप्रदेशविशेषो ह्रद, युष्मदित्युपलक्षणम्, ससारावर्त्तपतितानां लोकानां ससारविषया तृष्णा सुख-दु खोपभोगलक्षणा गङ्गाप्रवाहोऽपहरति तथाऽय राम इति व्यङ्ग्योऽर्थ । अस्मिन्नर्थे हेतुगर्भविशेषणमाह-किंलक्षणो राम ? 'स्वच्छस्वभाव ' स्वच्छ -निर्मल स्वभावो यस्य, निर्लेपत्वात् ससारपङ्कास्पृष्ट शुद्धमुक्तस्वभाव इति, ह्रदोऽपि 'स्वच्छस्वभाव ' अगाधोदकत्वादकलुष । किंलक्षण ? 'सीतामङ्के दधान ' जानकीमुत्सङ्गे बिभ्रत्, ह्रदोऽपि 'सीतां' सारसीमङ्के बिभ्राण । किंभूता सीताम् ? 'स्फुटितपुटकिनी वक्त्रसौभाग्यभाज' स्फुटित-विकसित यत् पुटकिनी-कमलिनी तस्या वक्त्र कमल कमलिनी कमलेषु क्रीडया सौभाग्यभाग् भवति ताम् । पुन किंलक्षण राम ? 'अनुजेन'

---

१ °पुटकिनी व° भा ३ ४ । एतत्पाठानुसारेण बालबोधिन्यां व्याख्यानमस्ति । २ मुष्णातु भा १ ३ ४ । एतत्पाठानुसारेण बालबोधिन्यां व्याख्या वर्तते ॥ ३ °मुनिवचनात् भा १ ॥ ४ निषण्ण भा ३ ४, एतत्पाठानुसारेण बालबोधिन्यां व्याख्या दृश्यते ॥

लक्ष्मणेन क्षणमपि 'नपरित्यक्तपार्श्व' त्यक्तं पार्श्वं-समीपं यस्य स, न नञा सह समासः, 'नपरित्यक्तपार्श्वः' ह्रदोऽपि हंसेन न त्यजते। स कः राम ? 'यः' रामः 'कुम्भोद्भवमुनिभवनात्' अगस्त्याश्रमात् 'पञ्चवट्यां निविष्टः' पञ्च वटाः विद्यन्ते यस्यां सा पञ्चवटी, गर्त्ता वा इति, [तस्याम्] 'निविष्टः' प्राप्तः अगस्त्याश्रमात्, इन्द्रशरासना ऽक्षयतूणीर-खड्गावाप्ति सूचिता अगस्त्यभवनादिति पदेन। तथोक्तम्—

अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम्।
खड्गं च परमप्रीतस्तूणीरा-ऽक्षयसायकौ ॥ इति ॥

उपमालङ्कारः ॥ ६० ॥

## [ बालबोधिनी ]

देव इति। 'देवः' स रामः 'युष्मत्तृष्णां' युष्माकं इच्छां 'पुष्णातु' पूरयतु। कीदृशः ? 'कुम्भोद्भवमुनिभवनात् पञ्चवट्यां' अगस्त्याश्रमात् पञ्चवटीविषये 'निषण्णः' उपविष्टः। कीदृशो देवः ? 'स्वच्छस्वभावः' निर्मलचित्तः। पुनः कीदृशः ? सीतामङ्के 'दधानः' बिभ्रत्। किंलक्षणाम् ? 'स्फुटितपुलकिनीं' स्फुटितानि पुलकानि यस्याः सा तां रोमाञ्चवतीम्। पुनः किंभूताम् ? 'वक्त्रसौभाग्यभाजं' मुखसौन्दर्यं भजतीति वक्त्रसौभाग्यभाक् ताम्। पुनः कादृशः ? उत्प्रेक्षते-शूलिमौलिस्थितायाः 'सरितः' गङ्गायाः ह्रद इव। शूलमस्यास्तीति शूली तस्य मौलिः-मस्तकः तस्मिन् स्थिता तस्याः। कीदृशो ह्रदः ? 'स्वच्छस्वभावः' स्वच्छ-निर्मलः स्वभावो यस्यासौ। कीदृशः ? हंसेन इव 'अनुजेन' लक्ष्मणेन क्षणमपि 'नपरित्यक्तपार्श्वः' यथा हंसेन गङ्गाया ह्रदः क्षणमपि नपरित्यक्तपार्श्वो भवति ॥ ६० ॥

*

**काकेभ्यः कायकान्तिं तदरिपरिचितं शब्दतत्त्वं च नीत्वा**
**गार्ध्रीं क्रव्येषु गर्द्धीं तदपरमुचितं वस्तु तादृग्विधं च।**
**एकं पात्रं धरित्र्यां किल कमलभुवा या कृता यातुधानी**
**द्राक् तां व्यग्रामनुग्रप्रकृतिरकृत यः स क्षतादू रक्षतादू वः ॥६१॥**

## [ हृदयरञ्जनी ]

**काकेभ्यः कायेति।** 'सः' रामः 'वः' युष्मान् 'क्षतात्' प्रहारात् अन्यात् रक्षतु। स कः ? 'यः' रामः 'अनुग्रप्रकृतिः' अनुग्रा-सौम्या प्रकृतिः-स्वभावो यस्य सः

१ कालका° भा २ ॥ २ °रच गृद्दीरेवा भा ३ ४। एतत्पाठानुसारेण बालबोधिन्यां व्याख्याऽस्ति॥
३ त्रिमपर° भा १ २ ३ ४। एतत्पाठानुसारेण बालबोधिन्यां व्याख्यानं वर्तते ॥

सन्नपि तां 'यातुधानीं' राक्षसीं 'व्यग्रां अकृत' उत्पणामकार्षीद् 'द्राक्' तत्क्षणमेव। व्यग्रामिति विशेषणेन अर्थद्वय सूच्यते। कथम्? रामदर्शनेन मन्मथवशा सती व्यग्रा जातेति, अथ च रामास्वीकाराद् व्यग्रेति। सा का यातुधानी? 'कमलभुवा' ब्रह्मणा 'कृता' निर्मिता 'किल' इति कष्टे। किं कृत्वा कां सामग्रीं मेलयित्वा? तां सामग्रीमाह— 'काकेभ्य' वायसेभ्य 'कायकान्ति' शरीरद्युतिं कृष्णत्वम्। 'तदरिपरिचित' तेषां-काकाना अरय—उलूका तेषां परिचित—अभ्यस्त यद् निशाचरत्व रात्रिभ्रमणत्व च तेषां 'शब्दतत्त्वं च' उलूकध्वनिं च। तथा 'गार्ध्रीं' गृध्रसम्बन्धिनीं 'क्रव्येषु' मांसेषु 'गर्द्धां' भक्षणाकाङ्क्षालोलुपत्व च गृहीत्वा। 'अपर' एतच्च तदस्य 'उचित' योग्य तादृग्विध च धरित्र्या एक 'पात्र' आधार 'नीत्वा' कृत्वा 'व्यधायि' निर्मिता तां विकृतरूपां कुर्वन् व पायादिति सम्बन्ध। अनुग्रो व्यग्रां करोतीति विरोध ॥ ६१ ॥

[ बालबोधिनी ]

**काकेभ्य** इति। 'स' राम 'व' युष्मान् 'क्षनाद्' भयाद् रक्षतात्। स क? 'य' राम 'तां यातुधानीं' राक्षसीं सूर्पणखां 'व्यग्रां' छिन्ननासिकामकृत। कीदृश? 'अनुग्रप्रकृति' न उग्रा प्रकृति—स्वभावो यस्यासौ अनुग्रप्रकृति। तां काम्? 'कमलभुवा' ब्रह्मणा धरित्र्या एकमेव पात्र या 'यातुधानी' सूर्पणखा 'निर्मिता' कृता। किं कृत्वा? काकेभ्य सकाशात् 'कायकान्ति' शरीरशोभां 'गृहीत्वा' आदाय। पुन किं कृत्वा? 'तदरिपरिचित शब्दतत्त्व गृहीत्वा' तेषां—काकाना अरय—उलूका तेषु परिचित—अभ्यस्त यत् 'शब्दतत्त्व' शब्दरहस्य तद् गृहीत्वा। पुन किं कृत्वा? 'क्रव्येषु' मांसेषु गार्ध्रीं गृध्रसम्बन्धिनीं 'गर्द्धां' स्पृहां गृहीत्वा। यतोऽपर तादृग्विध 'उचित' योग्य वस्तु किम्? न किमपि, अत एव एक पात्र ब्रह्मणा यातुधानी निर्मितेति ॥ ६१ ॥

*

देयादायुः प्रभूतं विपिनभुवि स वः सञ्चरंश्चारुमूर्त्ति-
मीयापुंस्केसरित्वे भयकृति जगतां यं प्रवृत्तावतारम्।
सा रक्षःस्वामिजामिः खरनखरवती बिभ्रती रौद्रमास्यं
यद्यागच्छेद् धृपस्यन्त्यहह! तदनयोः स्यात् तदा साधुयोगः ॥६२॥[२]

[ हृदयरञ्जनी ]

देयादायुरिति। 'स' राम 'व' युष्माक 'प्रभूत' विपुलं 'आयु' जीवित देयात्। किं कुर्वन्? 'विपिनभुवि' काननभूमौ 'सञ्चरन्' भ्रममाण। पुन किंलक्षण?

---

१ यद्यायास्यद् आ २ ३ ४। एतत्पाठानुसारेण बालबोधिन्यां व्याख्याऽस्ति ॥

२ व्याख्याद्वयेऽपि नास्य काव्यस्य समीचीनाऽर्थसङ्गतिरवगम्यते ॥

'चारुमूर्त्ति' चारु–रमणीया मूर्त्ति–देहो यस्य स । स क ? 'सा' यातुधानी 'रक्ष स्वामिजामि' रक्ष स्वामी–रावण तस्य जामि–भगिनी सूर्पणखा 'वृषस्यन्ती सती' वृर्ष–भर्त्तारमात्मन इच्छन्तीति वृषस्यन्ती सती यदि रामं 'आगच्छेद्' मिलेद् 'अहह' इति कष्टे 'तदा' तर्हि 'अनयो' राम-सूर्पणखयो साधुयोग 'स्याद्' भवेत् । किं कुर्वती सा ? 'रौद्रमास्यं बिभ्रती' भयङ्करं मुख बिभ्राणा । कीदृशो राम ? चारुमूर्त्ति । किम्भूतम्? 'य' राम जगता भयकृति 'मायापुम्केसरित्वे' मायाया पुरुषसिंहत्वे रावणे 'प्रवृत्तावतारं' प्रवृत्त–कृत अवतार–अवतरण येन तम्, रावणवधार्थं कृतावतारमित्यर्थ । किंलक्षणा सूर्पणखा ? 'खरनखरवती' खरा–तीक्ष्णा नखा अस्या सन्तीति खरनखरवती । भय करोतीति भयकृत् तस्मिन् । भावशबलता ॥ ६२ ॥

[ बालबोधिनी ]

देयादायुरिति। 'स राम 'व' युष्मान् 'प्रभूत' प्रवृद्ध आयु देयात्। किं कुर्वन्' 'विपिनभुवि' वने 'सञ्चरन्' गच्छन्। कीदृश ? 'चारुमूर्त्ति' चारु–मनोहरा मूर्त्तिर्यस्यासौ। स क ? सा 'रक्ष स्वामिजामि' रावणभगिनी सूर्पणखा खरनखरवती 'रौद्र आस्य' भयङ्कर मुख दधती 'वृषस्यन्ती' राम पतिमिच्छन्ती मायापुरुकेसरित्वे जगता भयकृति य राम 'प्रवृत्तावतार' नृसिंहावतारे प्रवर्त्तमान सन्त प्रति यदि आयास्यत् 'तत्' तर्हि तदा तस्मिन् अवसरे 'अहह' इति आश्चर्ये 'अनया' राम सूर्पणखयो साधुयोग स्यात्। रक्षसां स्वामी तस्य जामि–भगिनी रक्ष स्वामिजामि । खरश्च नखरश्च खर नखरौ तौ विद्येते यस्या सा खरनखरवती। वृष आत्मन इच्छन्तीति वृषस्यन्ती "अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि" [ पाणिनि० ७-१ ५१ ] इत्यसुक् । पुमांश्चासौ केसरी च पुरुकेसरी, मायया पुरुकेसरी तस्य भव तत्त्व तस्मिन्। जगता 'भयकृति' भय करोतीति भयकृत् तस्मिन् ॥ ६२ ॥

•

भ्रातुर्भक्तस्य यद्यप्यदित रघुपतिः पादुके स्वे तथापि
क्रामन् न प्राप पीडां विपिनभुवि खरान् कण्टकादींस्ततोऽपि ।
शस्त्राभ्यासाय शङ्के त्रिशिरसमवधीद् यश्च जेष्यन् दशास्यं
श्रीलास्यं गेहरङ्गे रचयतु स चिर दूषणद्वेषणो वः ॥ ६३ ॥

[ हृदयरञ्जनी ]

भ्रातुर्भक्तस्येति। स 'दूषणद्वेषण' दूषणदैत्यद्वेषी राम 'व' युष्मान् 'गेहरङ्गे'

१ इति खेद 'भ' पु० ॥ २ खरान् कण्टकाद् यस्त° भा ३-४ । एतत्पाठानुसारेण बालबोधिन्यां व्याख्या ॥ ३ °द्वेषणोऽपि भा १-२-३-४ ॥

गेह एव रङ्ग'–नृत्यभूमिस्तत्र श्रीलास्य–लक्ष्म्या नृत्य चिर 'रचयतु' निर्मातु। स क ? यो रघुपति 'भक्तस्य' सेवकस्य 'भ्रातु' भरतस्यापि स्वे पादुके 'अदित' दत्तवान् तथापि वनभुवि 'खरान्' तीक्ष्णान् 'कण्टकादीन्' बुर्बुरादीन् कण्टकानाक्रामन् पीडा 'न प्राप' न लेभे [ इति ] विरोध। कथम् ? य पादत्राणरहित कण्टकान् मृद्नाति स तज्जनिता व्यथा प्राप्नोति, न तथापि, परिहार –स्वयमसौ राम भरताय राज्यपालनार्थं आत्मन प्रतिकृति पादुके दत्त्वा वनभुवि खरान् लोककण्टकान् राक्षसान् मृद्नन्–मारयन् कष्ट न जगाम, हेल्यैव हतवानिति, पञ्चवट्या दूषणप्रमुखान् राक्षसान् जघानेति भाव। त्तो हेतोरहमिति 'शङ्के' तर्कयामि–य 'त्रिशिरसमवधीत्' त्रीणि विषमाणि शिरासि यस्य स त्रिशिरा, त त्रिशिरस राक्षस हन्ति स्म। 'दशास्य' दशमुखं रावण 'जेष्यन्' जेतुमिच्छन् 'शस्त्राभ्यासाय' शस्त्राभ्यास कर्तुम्, तुमर्थे चतुर्थी, यो महल्लक्ष विद्धुकामो भवति स पूर्वं निकटवर्त्ति अल्प लक्ष विध्यति पश्चाद् महति प्रवर्त्तते। विरोधाभासोत्प्रेक्षे ॥ ६३ ॥

[ बालबोधिनी ]

**भ्रातुर्भक्तस्येति**। स 'दूषणद्वेषण' दूषणनाम्नो राक्षसस्य हन्ता राम 'व' युष्माक 'गेहरङ्गे' गृहाङ्गणे 'श्रीलास्य' समृद्धिविलास चिर 'रचयतु' विस्तारयतु। स क ? 'य' राम 'शङ्के' सम्भावयामि 'दशास्य' रावण 'जेष्यन्' जेतुमिच्छन् सन् शस्त्राभ्यासाय 'त्रिशिरस' राक्षस 'अवधीद्' जघान। त्रीणि शिरासि यस्य स त्रिशिरा तम्। अपर कीदृश राम ? य· 'रघुपति' रामो यद्यपि भक्तस्य 'भ्रातु' भरतस्य 'स्वे' स्वकीये 'पादुके' 'अदित' अदात् तथापि 'विपिनभुवि' वने 'क्रामन्' चरन् सन् 'ततोऽपि' तस्मादपि पादत्राणे 'खरात्' खरराक्षसात् 'पीडां' व्यथा 'न प्राप' न प्राप्तवान्। कीदृशात् खरात् ? 'कण्टकात्' कण्टक इव कण्टक तस्मात्, अ योऽपि कश्चित् पादत्राणरहितो वने गच्छन् खरात्–तीक्ष्णात् कण्टकात् पीडा प्राप्नोत्येव, रामस्तु पादुकारहितोऽपि खरात् कण्टकात् पीडां नाऽऽप्तवान्। भ्रातुरत्र यद्यपि दात तथापि सम्प्रदानाभावान्न चतुर्थी सम्प्रदानमित्यत्रो पसर्गद्वयग्रहणात्, यथा रजकस्य धौत ददाति इत्यत्र षष्ठी, तथाऽत्रापीति युक्तमेतत् ॥ ६३ ॥

*

विख्यातान् वः करोतु त्रिजगति संयशा[2] यात्रया यत्र नीते
दूरं शूरमकाण्डे कनकमयमृगच्छद्मना सानुजेऽपि।
लङ्केन्द्रस्तत्पुरन्ध्रीहरणमतिरतिक्रम्य विक्रान्तमार्गं
द्वेधाऽप्यासीत् तपस्वी स्मर-दरजनितस्वेदभेदस्विदेहः ॥ ६४ ॥

---

१ न प्राप॰ पु॰ ॥ २ स यशो यात्र॰ भा १ ४। एतत्पाठानुसारेण बालबोधिनी ॥

## [ हृदयरञ्जनी ]

**विख्याताननिति ।** स राम 'व' युष्मान् जगति 'विख्यातान्' प्रसिद्धान् जाति क्रिया-गुणै कुर्यात्। कया कथ य(?य)था भवति? सयशा –यशसा सह वर्तते यस्मिन् कर्मणि 'लङ्केन्द्र' रावण 'द्वेधाऽपि' प्रकारद्वयेनापि तपस्वी 'आसीद्' बभूव । किं कृत्वा? 'विक्रान्तमार्ग' पराक्रमपथ शौर्यशृङ्ग 'अतिक्रम्य' त्यक्त्वा 'तपस्वी जात' अथ च तपस्विवेष अवलम्ब्य सीताहरणार्थमागत इति तपस्वीति प्रकारद्वयेनाऽऽसीदिति । क सति? 'कनकमृगच्छद्मना' स्वर्णमृगव्याजेन 'सानुजे' लक्ष्मणसहिते 'यत्र' यस्मिन् रामे 'यात्रया' गमनेन 'दूर' यात्रया दूरगमनेन 'नीते सति' प्रापिते सति। किम्भूते रामे? 'शूरप्रकाण्डे' शौर्यस्कन्धे । किम्भूतो रावण? 'तत्पुरन्ध्रीहरणमति' तस्य पुरन्ध्री तस्या हरणं तत्र मति –बुद्धिर्यस्य स, रणे जेतुमशक्य राम विदित्वा कनकमृगव्याजेन वञ्चयित्वा सीता हृतवान् इतिकृत्वा तपस्वी । पुन किंलक्षण? 'स्मर दरजनितस्वेदमेदस्विदेह' स्मरश्च दरश्च काम भये ताभ्या जनितो यो स्वेदस्तेन मेदस्वी–पुष्ट देहो यस्य स, सात्त्विक(?)भावेन भयेन च स्विद्यते जन इति स्थिति । आवेग त्रासयो सन्धि । शृङ्गार-भयानकविरोधरसयो सङ्कर ॥ ६४ ॥

## [बालबोधिनी]

**विख्यातान् व इति ।** 'स' राम 'व' युष्मान् 'त्रिजगति' स्वर्ग मृत्यु पाताले 'विख्यातान् प्रसिद्धान् करोतु । स क? 'यत्र' श्रारामे 'सानुजेऽपि' सलक्ष्मणेऽपि 'कनकमयमृगच्छद्मना' सुवर्णमृगच्छलेन कृत्वा 'पथो यात्रया' अनुगमनेन दूर नीते सति 'लङ्केन्द्र' रावण 'तत्पुर ध्रीहरणमति' तस्य–रामस्य पुरन्ध्री–सीता तस्या हरणमति सन् 'विक्रान्तमार्ग' त्यक्तमार्ग यथा भवति तथा 'द्वेधा' द्विप्रकारेणापि शरीरेण कर्मणा च तपस्वी आसीत् । कीदृशो लङ्केन्द्र? 'स्मर-दरजनितस्वेदमेदस्विदेह स्मरश्च दरश्च [ताभ्यां] काम भयाभ्या जनित –उत्पन्न य स्वेद तेन मेदस्वी–मेदयुक्तो देह –शरीर यस्य स तादृश । द्वेधा कथ तपस्वी? भिक्षुर तप सन्तापयुक्तदेहश्च ॥ ६४ ॥

*

कल्याणं कम्बुपाणिः प्रगुणयतु स वस्न निरम्पयाऽऽर्तस्वरत्वं
मारीचेनोच्यमान चकितचकितया सीतया यत्र जैत्रे ।
भीतिं सम्भावयन्त्या शुचिरपि सरुपा यद्दुरुक्तं सुमित्रा
पुत्रः सद्यक्रियामाचरनरकपरिक्षिप्तयाऽऽप्त फल तत् ॥ ६५ ॥

---

१ °र्त्तनाई भा २ ॥

[हृदयरञ्जनी]

**कल्याण**मिति। स 'कम्बुपाणि' कम्बु पाणौ यस्य स राम 'व' युष्माक कल्याण 'प्रगुणयतु' बहुल करोतु। सीतया 'सरुषा सत्या' सक्रोधया सत्या 'शुचिरपि' काय वाङ्-मनोभि पवित्रोऽपि 'सुमित्रासुत' लक्ष्मण 'दुरुक्त' 'मयि विषये त्व रतोऽसि' इति दुष्ट उक्त 'यत्र' तत्क्षणमेव तस्य दुरुक्तस्य फल प्राप्तम्। किंलक्षणया सीतया ['त्रियामाचरनरकपरिक्षिप्तया'] त्रियामाचर रात्रिञ्चरो रावण स एव नरक तेन परिक्षिप्तया—हृतया। पुन किं० ? 'चकितचकितया' सम्भ्रान्तया अत एव 'जैत्रे' जयनशीले 'यत्र' यस्मिन् रामे 'भीतिं' मरणलक्षण भय 'सम्भावयन्त्या' विचारयन्त्या। किं कृत्वा ? मारीचेनोच्यमानमार्त शब्द 'निशम्य' श्रुत्वा अयमर्थ **उत्तररामायणे—**

रामेण हन्यमानेन = मारीचेन = 'हा लक्ष्मण' इति क्रन्दितम्।
– तत् श्रुत्वा सीता लक्ष्मण प्राह – केनचिद् मृगरूपेण दानवेन रघूद्वह ॥
गम्यतामाशु सौमित्रे ! हत प्रायेण मे पति।
इत्युक्तो लक्ष्मणो देवीं प्राह ज्येष्ठानुशासने ॥
स्थितो न राक्षसाद् भीती रामस्यास्तीति जानकि !।
त्वा विहायान्यतो गन्तुं ज्येष्ठस्याऽऽज्ञा न चास्ति मे ॥
साऽब्रवीच्च तदाकर्ण्य लुब्धोऽसि मयि पापधी।
तत क्रुद्धो शशापास्यै त्व रक्षोहस्तमाप्नुहि ॥ इति ॥

तच्छापवशाद् रावणगृहेऽस्या वासो जात, तत्फल प्राप्तमिति कथासम्बन्ध। त्रास-कोपयोर्भावयो सन्धि। भयानक-रौद्रौ रसौ ॥ ६५ ॥

[बालबोधिनी]

कल्याणमिति। 'स' राम व कल्याण 'प्रगुणयतु' विस्तारयतु। कीदृश ? 'कम्बुपाणि' पद्महस्त। स क ? यत्र 'जैत्रे' शूरे रामे 'भीतिं' भय सम्भावयन्त्या 'सरुषा' सक्रोधया सीतया 'शुचिरपि' निर्मलोऽपि सन् यत् 'सुमित्रापुत्र' लक्ष्मण 'दुरुक्त' दुष्टमुक्त तस्य फल 'त्रियामाचरनरकपरिक्षिप्तया' सत्या सद्य आप्तम्। त्रयो यामा यस्यां सा त्रियामा—रात्रि, तस्यां चर ताति त्रियामाचरा, स एव नरक तस्मिन् परिक्षिप्ता तया, अ याऽपि पापकर्त्ता नरक क्षिप्यते अतो लक्ष्मणो दुष्ट वच यत उक्त तस्य फल तत्क्षणमेव सीतया प्राप्तम्। कीदृशया सीतया ? त मारीचेन उच्यमान 'आर्त्तशब्द' पीडित शब्द निशम्य 'चकितचकितया' भीतभीतया अतिशयेन चकितयेत्यर्थ ॥ ६६ ॥

'विभु.' व्यापक 'स' रामः 'व' युष्मान् 'अवतु' रक्षतु । स कः? 'शकुन्ते' जटायौ 'वैकुण्ठं' विष्णुलोकं सम्प्रयाते सति । कस्मात्? 'यद्गृहाणां' यस्य—रामस्य गृहाणा—कलत्रस्य '[अप]हरणमहापर्वणि' [अप]हरणमेव महापर्व तस्मिन् 'प्राणदानात्' प्राणत्यागात् "गृहाः पुंसि च भूम्न्येव" [अमर० का० २ वर्ग २ श्लो० ५] इति वचनाद् बहुवचनम् । अतो हेतोः प्रीत्या 'भास्वान्' सूर्य 'तस्य' जटायो 'वप्तारं' अरुणं 'पुरस्कृत्य' अग्रे कृत्वा 'इह' लोके 'कृत्यं विधत्ते' दिवसकरण-मेरुभ्रमणलक्षणं कृत्यं—कार्यं विधत्ते—कुरुते । 'च' अन्यत् सत्यं नित्यं 'पुन' चार्थे 'हरि' केशव. प्रीत्या 'तस्य' जटायो 'पितृव्यं' पितृभ्रातरं 'पन्नगारिं' गरुडं 'उपरि करोति' ध्वजस्योपरि निधत्ते, ध्वजं चकारेत्यर्थः ॥ ६७ ॥

[बालबोधिनी]

तिग्मांशोरिति । 'तिग्मांशो' श्रीसूर्यस्य वंशस्य रत्न स 'विभुः' प्रभू रामः व अवतु । स कः? यद्गृहाणामपहरणमहापर्वणि प्राणदानात् 'शकुन्ते' पक्षिणि जटायौ वैकुण्ठं 'सम्प्रयाते' गते सति 'भास्वान्' श्रीसूर्य इदानीमपि 'तस्य' शकुन्तस्य 'वप्तारं' पितरं अरुणं 'पुरस्कृत्य' अग्रे कृत्वा 'कृत्यं' कार्यं 'विधत्ते' करोति । यस्य—रामस्य गृहाः—सीता यद्गृहा तेषां अपहरणमेव महापर्व तस्मिन्, "पुंसि बहुत्वे" इत्यभिधानं तस्माद् बहुवचनम् । यद् "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति सीतायां गृहप्रयोगः । उत्कर्षं दृष्टान्तेन दर्शयति—अथ दृश्यते यत् 'तस्य' शकुन्तस्य 'प्रीत्या' पुनः हरिरपि तत् पितृव्यं 'पन्नगारिं' गरुडं 'उपरि' ध्वजायां करोति, "हरिश्च गरुडध्वजः" इत्युच्यते । पद्भ्यां न गच्छन्तीति पन्नगाः तेषां अरिः पन्नगारिः तम् । पन्नगारिरित्यत्र संज्ञात्वाद् "न लोपो नञः" [पाणिनि० ६-३-७३] इति नलोपाभावः ॥ ६७ ॥

•

सीतां संस्मृत्य नीतामनुजमसुरिनं वीक्ष्य विज्ञाय कान्ता-
  हर्तारं च प्रतिज्ञां घनभवनपतेः सन्ध्युराकर्ण्य कर्ण्याम् ।
ग्लानिं ग्लानिं प्रकोपं प्रमदमनुपदं विभ्रदभ्रेषणं यः
  श्रेयःश्रेणीं पुराणः प्रथयतु पुरुषः पूर्वपर्यायकल्पः ॥ ६८ ॥

[हृदयहारिणी]

प्रथमतु । किम्भूत ? पूषवशस्य–सूर्यवशस्य एकभूष –एक मुख्य मण्डनम् । किंलक्षण ? 'अभ्रेपण' सामर्थ्यं बिभ्रत् । पुन किं० ? 'सीता नीता' जानकीं हृतां सम्मृत्य ग्लानि 'विभ्रद्' दधान । किंलक्षण ? 'असुखिन' सीताविरहखिन्न राम दृष्ट्वा सखेद 'अनुज' लक्ष्मण 'वीक्ष्य' दृष्ट्वा 'ग्लानिं' तनुता 'बिभ्रद्' बिभ्राण । पुन किं० ? 'कान्ताहर्त्तारं' कान्ताया –सीताया हर्त्तार–भेत्तार रावण 'विज्ञाय' अवबुध्य 'प्रकोपं' अमर्षं बिभ्रत् । पुन किं० ? 'वनभवनपते सख्यु' वन–अरण्य भवन येषा ते वनभवना तेषा पति तस्य, 'सख्यु' मित्रस्य सुग्रीवस्य 'यत्र कुत्रापि स्थिता सीतामानीय समर्पयामि' इति 'कर्ण्यां' श्रवणयोग्या 'प्रतिज्ञा' सन्धा 'आकर्ण्य' श्रुत्वा 'प्रमद' हर्षं च बिभ्रत्, 'एतस्मात् सख्यु सकाशात् शत्रुसाधन सीताप्राप्तिश्च भविष्यति' इति हर्ष । अत्र ग्लानि-विषाद प्रकोप हर्षाणा व्यभिचारिभावाना सन्धि तदनुगुणो रसश्च ॥ ६८ ॥

## [ बालबोधिनी ]

**सीता सस्मृत्येति** । पुराण पुरुष 'अभ्रेविर्णी' अपतनशाला 'श्रेय श्रेणीं' कल्याण पङ्क्ति प्रथयतु । कीदृश ? 'पूषवशैकभूष ' सूर्यवशस्य एकाभरणम् । किं कुर्वन् ? 'अनु पद' पदे पदे सीतां 'सस्मृत्य' स्मारयित्वा ग्लानिं बिभ्रत् । अपर किं कुर्वन् ? अनुजम सुखिन ' वीक्ष्य' दृष्ट्वा ग्लानि बिभ्रत् । तथा ' कान्ताहर्त्तार' रावण 'विज्ञाय' ज्ञात्वा प्रकोप बिभ्रत् । तथा च 'वनभवनपते सुग्रीवस्य 'सख्यु ' मित्रस्य 'कर्ण्यां' श्रोतुमर्हां प्रतिज्ञां 'आकर्ण्य' श्रुत्वा 'प्रमद' हर्षं बिभ्रत् ॥ ६८ ॥

सप्ताङ्गं येन राज्यं तृणवदवमतं कुर्वता वप्तुराज्ञां,
सप्तार्चिःसन्निभेन प्लवगपतिमुदे सप्त भिन्नाश्च तालाः ।
सञ्जाताः सप्ततन्तूनकृपत ऋषयः सप्तसप्तोऽपि जातः
सप्ताश्वस्यान्वये वः प्रमदयतु हरेः सप्तमः सोऽवतारः ॥ ६९ ॥

## [ हृदयरञ्जनी ]

**सप्ताङ्गमिति** । 'हरे ' विष्णो सप्तम स रामस्यावतार 'व ' युष्मान् 'प्रमदयतु' हर्षयतु [ किम्भूत ? 'सप्ताश्वस्य' सूर्यस्य 'अन्वये' वंशे ] जात इव, परमार्थतस्तु स न जायत एव । पुन किम्भूत ? 'सप्तसप्त ' सप्त सप्ता –सप्तसङ्ख्या जटा यस्य स, वनगमनसमये जटा धृतवान् । स क ? 'येन' रामेण 'वप्तु ' पितु आज्ञा कुर्वता सता 'सप्ताङ्ग राज्य' स्वामि-अमात्य सुहृत् कोश राष्ट्र दुर्ग चम्वन्वितमपि राज्य तृणमिव 'अव

मत' अवगणित त्यक्तम् । किंलक्षणेन ? 'सप्तार्चिसन्निभेन' 'सप्त अर्चिंषि यस्य स सप्तार्चि –वह्नि तस्य सन्निभ –सादृश्य यस्य स तेन, सत्यामपि शक्तौ राज्य त्यक्तवानिति । 'च' अन्यद् येन 'प्लवगपतिमुदे' प्लवगाना–वानराणा पति–सुग्रीव तस्य [ मुदे– ] हर्षाय विश्वासाय पौरुषप्रख्यापनेन वालिवधार्थे विश्वासोत्पादनाय सप्त ताला 'भिन्ना ' खण्डिता , "बिभेद च पुनस्तास्तान् सप्तैकेन महेषुणा । " इति **बालरामायणे** । येन च 'सप्ताता ' विघ्नेभ्यो रक्षिता 'ऋषय ' मुनयो विश्वामित्रादय 'सप्ततन्तून्' यागान् 'अकृषत' कृतवन्त । अत्र सप्तशब्दस्य सर्वत्रोपक्रम्य निर्वाहाद् लाटानुप्रास, लाटानात्य तैश्च स ( ? ) इति ॥ ६९ ॥

[बालबोधिनी]

**सप्ताङ्ग**मिति । स हरे सप्तमाऽवतारो राम 'व ' युष्मान् 'प्रमदयतु' हर्षयतु । कीदृश ? 'सप्ताश्वस्य' सूर्यस्य 'अन्वय' वश 'जात ' उत्पन्न इव । स क ? 'यन ' रामेण सप्ताङ्ग राज्य तृणवद् 'अवमत ' ज्ञातम् । कीदृशन ? ' वप्तु पितुराज्ञा कुर्वता । अपर येन ' प्लवगपतिमुदे ' वानरपतिहर्षाय सप्त ताला भिन्ना । अपर ऋषयो यन सन्त्राता सन्त सप्त सप्ताऽपि 'सप्ततन्तून्' यज्ञान् ' अकृषत ' कृतवन्त । कादृशेन ? ' सप्तार्चिसन्निभेन ' अग्निसदृशेन प्रतापवता ॥ ६९ ॥

*

**काले कालाभ्रमालामलिनितवियति क्वापि याते क्षरद्भ्या-**
**मक्षिभ्यामश्रुधारास्तदभिनयमिवोद्भावयन् वः स पायात् ।**
**यद्बन्धौ सन्निधानं समधिगतवति स्फूर्जदोजः प्रभावे**
**स्वार्थं हित्वा हरीन्द्रो हरिरिव सहसा कार्यसज्जो बभूव ॥ ७० ॥**

[ हृदयरञ्जनी ]

**काले कालाभ्रे**ति । 'स ' राम व पायात् । किं कुर्वन् ? अश्रुधारा ' बाष्पप्रवाहान् 'क्षरद्भ्या' वमद्भ्या अक्षिभ्या 'तदभिनय' तस्य–मेघस्य अभिनय–प्रादुर्भावमिव 'उद्भावयन्' जनयन् 'काले' समये वर्षासमये क्वापि 'याते सति' गते सति । किंलक्षणे काले ? 'कलाभ्रमालामलिनितवियति' अभ्राणा मेघाना माला–पङ्क्ति, काला चासौ अभ्रमाला च तया मलिनित–मलिनीकृत वियद्–आकाशो यस्मिन् काले, स काले वर्षाकाल , तस्मिन् गते सति स्वय रामो वर्षाकाले जात इत्यर्थ, वर्षाकाले उदकधारा

१ °द्भावयन् व स पुन्यात् भा ३ ४ । एतत्पाठानुसारेण बालबोधिनी वर्तत ॥ २ स्फूर्जं-दूर्जं° भा ३ ४ । एतत्पाठानुसारेण बालबोधिनी ॥ ३ स्वार्थं हित्वा भा ३ ४ ॥

पतन्तीति रामोऽपि अश्रुधाराः वर्षतीति कृत्वा स्वयं च श्यामः। वर्णश्लेषालङ्कारः। स कः? 'यद्बन्धौ' यस्य बन्धौ-भ्रातरि लक्ष्मणे 'सन्निधानं' समीपं सुग्रीवसमीपं 'समधिगतवति सति' याते सति 'हरीन्द्रः' हरीणां-वानरगणामिन्द्रः-सुग्रीवः 'सहसा' झटिति 'कार्यसज्जो बभूव' रामकार्ये चित्तं ददावित्यर्थः। किं कृत्वा? 'स्वापं' निद्रां 'हित्वा' त्यक्त्वा। क इव? 'हरिरिव' यथा सिंहः कस्मिन्नसन्निधाने व्रजति सति निद्रां विहाय कार्यसज्जो भवति, प्रतिपक्षगतहननलक्षणे कार्ये जागरूको भवति। किंलक्षणे? 'स्फूर्जदोजःप्रभावे' स्फूर्जत्-स्फुरद् ओजश्च प्रभावश्च ओजःप्रभावौ यस्मिन्निति उपमा ॥ ७० ॥

[ बालबोधिनी ]

काले कालेति। 'सः' रामः 'वः' युष्मान् 'पुष्यात्' पालयतु। किं कुर्वन्? कालाभ्रमालामलिनितवियति कापि काले याति सति अश्रुधाराः क्षरद्रूपां अक्षिभ्यां कृत्वा 'तदभिनयमिव' तस्य-मेघस्य अभिनयं-अनुनयमिव 'उद्भासयन्' प्रकटीकुर्वन्, अभ्राणां माला अभ्रमाला काला च सा अभ्रमाला च तया मलिनितं-मलिनीकृतं वियद् यस्मिन् स तस्मिन्। स कः? स्फूर्जदूर्जप्रभावे यद्बन्धौ सन्निधानं समधिगतवति सति 'हरीन्द्रः' सुग्रीवः 'हरिरिव' कृष्ण इव सहसा 'स्वापं हित्वा' निद्रां त्यक्त्वा कार्यसज्जो बभूव। यस्य-रामस्य बन्धुः-लक्ष्मणः तस्मिन्। ऊर्जस्य प्रभावः, स्फूर्जन्-प्रकट ऊर्जप्रभावो यस्य सः, तस्मिन् ॥ ७० ॥

*

पश्यन् नीचैः कलत्रे दशवदनहृते ह्रीतवान् यः स पायाद्
व्यक्तीकर्तुं न शक्तः स्वमुखमिव पुरः पूर्वजस्याहिमांशोः।
वैदेहीं द्रष्टुमष्टस्वपि कपिनिवहास्तूर्णमाशासु जग्मुः
यस्याऽऽज्ञा तु प्रयाता व्यवसितमसमेष्वादधानेषु तेषु ॥ ७१ ॥

[ हृदयरञ्जनी ]

**पश्यन् नीचैरिति।** 'सः' राम. 'वः' युष्मान् 'पायाद्' रक्षतु। किं लक्षणः? 'ह्रीतवान्' सञ्जातलज्जः। लज्जायां हेतुमाह-'कलत्रे' सीतायां दशवदनः-रावणः तेन हृते सति-नीते सति अत एव। किं कुर्वन्? नीचैः पश्यन्। तत्र उत्प्रेक्ष्यते-'पूर्वजस्याहिमांशोः' सूर्यस्य पूर्वपुरुषस्य 'पुरः' अग्रे 'स्वमुखं' आत्मवदनं 'व्यक्तीकर्तुं' प्रकटयितुं न शक्त इव, उक्तिरपि लोके-यस्य कलत्रं हृतं भवति स लज्जया स्वज्ञातिजनानां मुखं दर्शयितुमसमर्थो भवति, नीचैस्तु पश्यन् याति च। जातिरलङ्कारोऽर्थान्तरन्यासश्च। स

१ यस्याऽऽज्ञाऽनुप्रयाता व्यवसितिमसमामाददानेषु भा ३-४। एतत्पाठानुसारेण बालबोधिनी ॥

क ? 'कपिनिवहा' वानरसमूहा यस्य 'वैदेहीं' सीता द्रष्टु [ अष्टस्वपि ] 'आशासु' दिक्षु तूर्णं 'जग्मु' गतवन्त । 'तु' पुन 'यस्य' रामस्य आज्ञा तेषु वानरेषु 'प्रयाता' प्राप्ता। किंलक्षणेषु ? 'व्यवसित' उद्यमाङ्गीकार आदधानेषु। पुन किं० ? 'असमेषु' तेजोविषमेषु दु सहेष्विति यस्याऽऽज्ञा गृहीत्वा सीता द्रष्टु दिक्षु निरगु ॥ ७१ ॥

[ बालबोधिनी ]

पश्यन्निति। 'स' रामो व पायात्। कीदृक् ? कलत्रे दशवदनन हृते सति 'ह्रीतवान्' लज्जित मन् नीचै पश्यन्। उत्प्रेक्षते–पूर्वजस्याहिमाशो पुर स्वमुख व्यक्तोकर्तुं न शक्त इव। स क ? यस्य वैदेहीं द्रष्टु कपिनिवहा अष्टस्वप्याशासु तूर्णं जग्मु । अपर 'तेषु' कपिनिवहेषु 'असमा' विषमां 'व्यवसितिं' व्यापारमादधानेषु सत्सु 'यस्य' रामस्य आज्ञाऽपि अनुप्रयाता ॥ ७१ ॥

*

**तत् सीता-रामयुग्मं युगपदपहरत्वप्रियं वः प्रवृत्तौ,**
**लब्धायां गृध्रराजादहिमकरकरश्रेणिविश्राणितार्त्तेः ।**
**यातायात वितन्वन्नधिजलधि जवेनाञ्जनायास्तनूजो**
**यस्याभिज्ञानदानात् त्रुटितमपि पुनः सन्दधे जीवितव्यम् ॥ ७२ ॥**

[ हृदयरञ्जनी ]

**तत् सीतारामयुग्ममिति**। तत् सीता-रामयो 'युग्म' मिथुन 'व' युष्माकं 'अप्रिय' अनिष्ट 'युगपत्' सममेव 'अपहरतु' दूरीकरोतु । स क ? 'अञ्जनायास्तनूज' हनुमान् 'यस्य' युग्मस्य 'त्रुटितमपि' छिन्नमपि जीवितव्य पुन 'सन्दधे' सन्धानमकरोत्, त्रुटित हि सन्धीयते केनचिद् यथा परस्परं तयो प्राप्त्याशाभावाद् गतानपि प्राणान् सङ्घटयति, कस्मात् ? 'अभिज्ञानदानाद्' उभयोरपि मुद्रा चूडारत्नप्रदानात्। किं कुर्वन् ? 'अधिजलधि' जलधौ 'यातायात' गमनागमन वितन्वन् । केन ? 'जवेन' वेगेन अविलम्बितेन रामस्याभिज्ञानमुद्रा सीतायै, सीताभिज्ञानचूडारत्न रामाय यच्छन्निति। क सत्याम् ? 'गृध्रराजात्' सम्पातेर्वचनात्। 'प्रवृत्तौ' 'सीता लङ्कायामशोकवने तिष्ठति' इति वार्त्तायां लब्धाया सत्याम् । किम्भूतात् ? अहिमकर–सूर्यस्तस्य करा–किरणास्तेषां श्रेणि–समूह तया विश्राणिता–दत्ता आर्त्ति–पीडा पक्षज्वलनलक्षणा यस्य स ॥ ७२ ॥

---

१ °तमित्र पुन भा २ ॥

[ बालबोधिनी ]

**तत् सीतारामयुग्मेति।** तत् सीतारामयुग्म युगपद् व अप्रिय हरतु। तत् किम्भूतम्? 'अञ्जनायास्तनूज' हनुमान् 'यस्य' युग्मस्य अ योऽन्य 'अभिज्ञानदानात्' चिह्नदानात् 'त्रुटितमपि' छिन्नमपि जीवितव्य पुन सन्दध। कीदृश? 'गृध्रराजाद्' जटायुभ्रातु सकाशात् 'प्रवृत्तौ' वार्त्ताया लब्धाया सत्या 'अधिजलधि' समुद्रे 'जवेन' वेगेन 'यातायात' गमनागमन 'वितन्वन्' कुर्वन्। कीदृशाद् गृध्रराजात्? 'अहिमकरकर श्रेणिविश्राणितार्त्ते' सूर्यकिरणाना पङ्क्त्या प्रापिता आर्त्तिर्यस्य स तस्मात ॥ ७२ ॥

*

**काकुत्स्थो मैथिली च प्रथयतु पृथिवीनाथतां वः प्लवङ्ग-**
**स्तीर्णाम्भोधिर्विमुह्यन्मनसमथ मिथो यं विना यां विलोक्य।**
**समप्रेम्णोरप्यनूनाऽधिककुल गुणयोरेकसौभाग्यभाजोः**
**संयोगादेतयोः स स्तुतिमकृत विधेर्विप्रयोगाच्च निन्दाम् ॥ ७३ ॥**

[ हृदयरञ्जनी ]

**काकुत्स्थ** इति। 'स' 'काकुत्स्थ' ककुदि तिष्ठतीति ककुत्स्थ, "तस्यापत्यम्" [ पाणिनि० ४ १-९२ ] इत्यण्, रामो मैथिली च 'व' युष्माकं पृथिवीनाथतां 'प्रथयतु' विस्तारयतु। अथ 'स' हनुमान् 'विधे' निर्मातु स्तुतिं 'अकृत' कृतवान्, कस्मात्? 'एतयो' सीता-रामयो संयोगात्। विप्रयोगाच्च निन्दाम्। एतौ सयोजयतो विघटयतश्च विधे स्तुति निन्दे अकार्षीत्। किं कृत्वा? य विना या दृष्ट्वा या विना य दृष्ट्वा, विधिरेतौ सयोज्य पुन किमिति वियोजितवान्' इति निन्दा-स्तुती। किम्भूतयो? 'समप्रेम्णो' समान स्नेहयो। पुन किंविधयो? अनूनाधिका कुलगुणाश्च, ऊन अधिकश्च, न ऊनाधिकौ अनूनाधिकौ कुल-गुणौ ययोस्तौ तयो समानकुल-गुणयो। तथा एकसौभाग्य—एक च तत् सौभाग्य च तद् भजेते एकसौभाग्यभाजौ तयो समसौन्दर्यलक्ष्मीकयोरिति। हर्ष विषादयो सन्धि ॥ ७३ ॥

[ बालबोधिनी ]

**काकुत्स्थो मैथिलीति।** स 'काकुत्स्थ' राम सा च 'मैथिली' सीता व 'पृथिवी नाथता' भूस्वामित्व प्रथयतु। स कः सा च का? तीर्णाम्भोधि 'प्लवङ्ग' हनुमान् 'या' सीता विना विमुह्यन्मनस 'य' राम 'विलोक्य' दृष्ट्वा 'च' अपर 'य' राम विना 'या' सीता विलोक्य 'एतयो' सीता रामयो सयोगाद् विधे स्तुतिं अकृत 'च' अपर 'अथ' अनन्तर एतयो विप्रयोगात् 'विधे' ब्रह्मण निन्दा अकृत। कीदृशयोरेतयो? तुल्यप्रेम्णो

अनूनाधिकतुल्यगुणयो एकसौभाग्यभाजो ' तुल्य प्रेम ययो , ऊनाश्च अधिकाश्च ऊनाधिका , न ऊनाधिका तुल्यस्य गुणा ययो , एक च तत् सौभाग्य च [ तद् ] भजेत इति [ एक सौभाग्य ]भाजौ तयो ॥ ७३ ॥

*

[1]भाग्यश्रीभाजन वः स जनयतु जनस्थाननक्तञ्चराणां
उद्दण्डैर्मुण्डपिण्डैः कलहंसखमुखैः प्रीणितश्राद्धदेवः ।
यश्चूडारत्नचिह्नं तदवनिदुहितुर्वातजातेन दत्तं
भूयो भूयोऽपि दध्रे हृदि शिरसि दृशोः शोक-हर्षाश्रुवर्षाः ॥७४॥

[ हृदयरञ्जनी ]

**भाग्यश्री**ति । 'स ' राम 'व ' युष्मान् भाग्यश्रीभाजन जनयतु । किम्भूत ' जनस्थाननिवासिना नक्तञ्चराणा–रात्रिञ्चराणा राक्षसाना 'मुण्डपिण्डै ' मुण्डानि–मस्तकानि तान्येव पिण्डास्तै प्रीणित –तृप्तिं गमित श्राद्धदेव –यमो येन स । स क ' यो राम 'अवनिदुहितु ' अवने –भूमे दुहिता–सीता तस्या 'चूडारत्नचिंह्नं' चूडारत्न 'भूयो भूयो' वारं वार 'हृदि' हृदये 'शिरसि' मोलौ 'दध्रे' बभार । किंलक्षणम् ' 'वातजातेन' वाताद्–वायोर्जातो वातजातस्तेन हनुमता 'दत्त' आनीय दत्तम् । 'च' अन्यद् 'दृशो ' नेत्रयो शोक-हर्षाश्रुवर्षा दध्रे, पूर्वमप्राप्तेर्हेतो शोकाश्रूणि पश्चात् तस्याभिज्ञानरत्नप्राप्ते हर्षाश्रूणि बभारेति वाक्यार्थ । स्मृति-हर्षयोर्भावयो सन्धि । किम्भूतै ' 'उद्दण्डै ' अनेकै, अनेक वात् तृप्तिजनकत्व तेषाम् । पुन किंलक्षणै ' [ 'कलहंसखमुखै '] कलह मद्दशमुखे ॥ ७४ ॥

[ बालबोधिनी ]

**भाग्य श्रीभाजनमि**ति । स व 'श्रीभाजन ' लक्ष्मीसहित भाग्य जनयतु । कीदृश ? 'जनस्थाननक्तञ्चराणा' तत्स्थाना राक्षसानां 'उद्दण्डै ' प्रौढै मुण्डपिण्डै कृत्वा कलहमखमुखे प्रीणितश्राद्धदेव , मुण्डान्येव पिण्डास्तै कलहो मख इव तस्य मुखे प्रीणित श्राद्धस्य देव – यमो येन स तथा । स क ' 'य 'राम तद् 'वातजातेन ' हनुमता दत्त 'अवनिदुहितु सीतायाश्चूडारत्नचिह्न 'भूयो भूयो पुन पुनरपि हृदि शिरसि दृशोश्च 'दध्र ' धृतवान् । कीदृश ? 'शोक हर्षाश्रुवर्षा ' शोकश्च हर्षश्च ताभ्यां अश्रूणि वर्षतीत्येवंशीलस्तस्यासौ शोकहर्षाश्रुवर्षी ॥ ७४ ॥

•

1 भाग्य श्रीभाजन मिति पाठानुसारेण बालबोधिनी । 2 'हंसखमुख मी' भा ३ ४ । एतत्पाठानुसारेण बालबोधिनी ॥ 3 'वर्षी भा २ ३ ४ । एतदनुसारेण बालबोधिनी ॥

**विश्वाधीशः स कीशप्रभुपरिचरितः पातु वः पातकौघाद्**
**दीर्घैर्निःश्वासवातैर्धुतमिव निवहं नीरदानां निरस्यन् ।**
**हर्षा-ऽमर्षानुरूपं रजनिचरपुरोपप्लवाय प्लवङ्गै-**
**र्वल्गद्भिर्यन्निदेशादजनि हरिमयं विष्टपं स्पष्टमेव ॥ ७५ ॥**

[ हृदयरञ्जनी ]

**विश्वाधीश** इति । 'विश्वाधीश' स्वामी 'स' राम 'व' युष्मान् 'पातु' रक्षतु। किंलक्षण ? 'कीशप्रभुपरिचरित' कीशानां–वानराणां प्रभु –सुग्रीव तेन परिचरित –सेवित । कस्मादवतु ? 'पातकौघात्' पातकसमूहात्। पुन किं कुर्वन् ? नीरदाना 'निवह' समूह निरस्यन्, 'नीरदाना निवह' इत्यनेन वर्षासमयो लक्ष्यते, न हि नीरदाना निरसन सम्भवति, वर्षासमयमतिवाहयन्। किम्भूतम् ? उत्प्रेक्षते–दीर्घै 'निःश्वासवातै' श्वसितवायुभि 'धुतमिव' निराकृतमिव, वातै किल मेघो नीयते। स क ? 'यन्निदेशाद्' यस्य आज्ञात 'प्लवङ्गै' वानरै बलीमुखै 'विष्टपं' जगत् स्पष्टमेव 'हरिमय' वानर व्याप्त 'अजनि' कृतम्। किं० ? हर्षा ऽमर्षानुरूप यथा भवति तथा हर्ष–सन्तोष अमर्ष–क्रोध तयोरनुरूप–सदृश यथा स्यात् तथा 'वल्गद्भि' उत्पतद्भि । किमर्थम् ? 'रजनिचरपुरोपप्लवाय' रजनिचर –रावण तस्य पुरं–लङ्का तस्या उपप्लवाय–नाशाय। हर्षा ऽमर्षयो सन्धि ॥ ७५ ॥

[ बालबोधिनी ]

**विश्वाधीश** इति । स 'विश्वाधीश' राम व 'पातकौघात्' पापसमूहात् पातु। कीदृश ? 'कीशप्रभुपरिचरित' कीशानां प्रभु –सुग्रीव तेन परिचरित –सेवित इत्यर्थ । कीदृश ? उत्प्रेक्षते–दीर्घैर्निःश्वासवातै कृत्वा 'नीरदाना' मेघाना 'निवह' समूह 'निरस्यन्' निराकुर्वन्निव। स क ? 'यन्निदेशात्' यस्य आदेशाद् 'रजनिचरपुरोपप्लवाय' लङ्काया उपद्रवार्थं हर्षा ऽमर्षानुरूप यथा स्यात् तथा वल्गद्भि प्लवङ्गै कृत्वा 'विष्टप' आकाश स्पष्टमेव हरिमयमजनि । हर्षश्च अमर्ष –क्रोधश्च तयोरनुरूपम् ॥ ७५ ॥

*

**यद् वः सद्वस्तु चित्ते वसति दिशतु तन्निर्विलम्बं कबन्ध-**
**श्रेणौ मक्रोधशोण रणरुचिरस[3]ङ्कुन्निक्षिपन्नक्षिकोणम् ।**

---

१ °वालैर्हत° भा ३ ४ ॥ २ चित्ते निवसति दिशतादिर्विलम्बं कबन्धश्रेणौ भा ३ ४। एतत् पाठानुसारेण बालबोधिनी । ३ °कृद् प्रक्षि° बालबोधिनी । कृद् विक्षि भा १ २ ३ ४ ॥

आर्ति यस्यापहर्त्तुं सरभसगतिभिर्वानराणां वरेण्यै-
र्दत्त मत्वा प्रयाणं प्रथममिव धृतिः प्रस्थिता रावणस्य ॥ ७६ ॥

[ हृदयरञ्जनी ]

यद् वः सद्वस्तु चित्ते इति । 'स' राम यत् सद्वस्तु 'व' युष्माक चित्ते 'वसति' वर्त्तते 'तद्' वस्तु युष्मभ्य 'निर्विलम्ब' शीघ्र 'दिशतु' ददातु । किंलक्षण ? 'रणरुचि' रणे–सङ्ग्रामे रुचि –प्रीतिर्यस्य स । किं कुर्वन् ? अत एव 'क्रोधशोण' क्रोधेन–कोपन शोण–रक्त 'अक्षिकोण' नेत्रप्रान्त 'असकृद्' वार वार 'कबन्धश्रेणौ' अम्बुराशौ समुद्रे 'निक्षिपन्' प्रेरयन्, 'मार्गरोध्ययम्' इति क्रोधेन पश्यतीत्यर्थ । 'रावणस्य' दशकन्धरस्य प्रथम धृति प्रस्थितेत्, उत्प्रेक्षते–पूर्वमेव वानरागमनापेक्षया रावणस्य 'धृति' धैर्य–हर्ष 'प्रस्थिता' जगाम । किं कृत्वा ? 'वानराणा वरेण्यै' कपिश्रेष्ठै 'प्रयाण दत्त मत्वा' सुरा ऽसुरानुलङ्घ्यस्य दशाननस्य ममोपरि वानरैर्जेतु प्रस्थान कृतमिति ज्ञात्वा रावणेन 'धृति' धैर्य त्यक्तमित्यर्थ । किम्भूतै ? 'सरभसगतिभि' त्वरितगमनै । किं कर्तुम् ? 'यस्य' रामस्य 'आर्त्ति' पीडा सीताहरणसञ्जातदु ख 'अपहर्त्तु' निराकर्तुम् । रावणशत्रु वधद्वारा हृदि शल्यरूपा पीडा उद्धर्त्तुमिति वीरस्योदय । उत्साह क्रोधयो सन्धि । उत्तरार्द्धे निर्वोतयो ( ? निर्वेद भययो ) सन्धि ॥ ७६ ॥

[ बालबोधिनी ]

यद् व सद्वेति । व चित्त यत् सद्वस्तु निवसति 'स' राम तद् 'निर्विलम्ब' सद्य 'दिशताद्' ददातु । कीदृश ? 'कलम्बश्रेणौ' शरा तत्स्थितपिच्छपङ्क्तौ 'असकृत्' पुन पुन अक्षिकोण प्रक्षिपन् । कीदृशमक्षिकोणम् ? 'सक्रोधशोण' सक्रोध यत अत एव शोण–ईषद्रक्तम् । अपर कादृश ? 'रणरुचि' रणे सङ्ग्रामे रुचि –प्रीतिर्यस्यासौ रणरुचि । स क ? यस्य आर्त्ति अपहर्तु 'सरभसगतिभि' शीघ्रगतिभिर्वानराणा 'वरेण्यै' मुख्यै प्रयाण दत्त मत्वा रावणस्य धृति प्रथम प्रस्थितेव ॥ ७६ ॥

*

तीरस्थः कीशवीरैः सममसममरुल्लोलकल्लोलराशे-
रम्भोधेर्लङ्घनार्थं विदधदवतु वो राघवो लङ्घनानि ।
अच्छिन्नस्वोत्तमाङ्गश्वरणगतिपुरस्कारमासाद्य लङ्का
लक्ष्मीमद्यापि भुङ्क्ते यदनुसरणतो रावणस्यैकबन्धुः ॥ ७७ ॥

१ °माङ्ग प्लवगपतिपुर° भा ३ ४ एतदनुसारेण बालबोधिनी ॥

## [हृदयरञ्जनी]

**तीरस्थ** इति। स राघव 'व' युष्मानवतु। किम्भूत ? 'अम्भोधे' समुद्रस्य 'लङ्घनार्थं' उत्तरणाय 'लङ्घनानि' उपवासान् 'विदधद्' उपवासव्रत कुर्वन्। 'असम०' असमश्चासो मरुच्च असममरुद्–महान् वायु तेन लोल–चपल कल्लोलाना–तरङ्गाणा राशि–परम्परा यस्य स तस्य। किल 'कीशवीरै' वानरसुभटै 'सम' साक 'तीरस्थ' तटे स्थित 'यदनुसरणत' यस्य–रामस्य अनुसरण–आश्रयण तस्माद् 'एकबन्धु रावणस्य' एकभ्राता विभीषण अद्यापि शाश्वतीं लङ्कालक्ष्मीं 'भुङ्क्ते' अनुभवति पालयति। किं कृत्वा ? 'अच्छिन्नस्वोत्तमाङ्ग' अक्षत स्वमस्तक यस्य स रामस्य 'चरणगतिपुरस्कार' चरणगते पुरस्कार–पूजा 'आसाद्य' कृत्वा, रावणस्तु पूर्वं छिन्नमस्तकै पशुपते पूजा विधाय लङ्कालक्ष्मीं प्राप साऽपि अस्थिरा जाता, अनेन तु अच्छिन्नैकशिरसाऽस्य पूजा विधाय स्थिरा लङ्कालक्ष्मी प्राप्तेति, "यावद् रामकथा लोके तावद् राज्य विभीषणे" इति स्मरणादिति योजनिका। यस्य चरणौ तावेव गतिर्यस्य स पुरस्कारो यस्य त एत एव लक्षण अच्छिन्न–अक्षत स्वोत्तमाङ्गं 'आसाद्य' प्राप्येति (?) अनुप्रास ॥ ७७ ॥

## [बालबोधिनी]

**तीरस्थ कीशेति**। स राघवो वोऽवतु। कीदृश ? 'कीशवीरै' सुग्रीवादिभि सम अम्भोधेः 'लङ्घनार्थं' उत्तरणाय लङ्घनानि 'विदधत्' कुर्वन्। कीदृश ? तीरस्थ। कीदृश स्याम्भोध ? 'असममरुल्लोलकल्लोलराशे' असमो या मरुद्–वायु तेन लोला–चञ्चलाश्च ते कल्लोलाश्च तेषा राशि–समूहो यस्मिन् स तस्य। स क ? 'रावणस्य एकबन्धु' विभीषण 'यदनुसरणत' यस्य–रामस्यानुसरणात् 'प्लवगपतिपुरस्कार' सुग्रीवपुरस्कार 'आसाद्य' प्राप्य अद्यापि लङ्कालक्ष्मीं भुङ्क्ते। कीदृश ? 'अच्छिन्नस्वोत्तमाङ्ग' अच्छिन्न स्वस्य उत्तमाङ्ग–शिरो यस्य स तथा ॥ ७७ ॥

*

पारावारं तरीतुं वियदिव विपुलं हेलयैवोज्जिहान:
कर्त्तुं तस्यावसान तमस इव निशाचारिणो वैरिणश्च।
आविष्कुर्वन् कराणामिव च कपिशतालङ्कृतानां बलाना-
मौद्दाम्य रामनामा रमयतु भवतः प्रीतिपूरेण सूरः ॥ ७८ ॥

---

१ लीलयै' भा ३ ४। एतत्पाठानुसारेण बालबोधिनी ॥

[ हृदयरञ्जनी ]

**पारावारं तरीतुमिति** । रामनामा 'सूर' सूर्य 'भवत' युष्मान् 'रमयतु' रेलयतु । केन ? 'प्रीतिपूरेण' प्रीतिरस्तुप्राप्त्या । किं कुर्वन् ? कपिशतालङ्कृतानां 'बलानां' सेनाना 'ओद्दाम्य' सामर्थ्यमौद्धत्य वा 'आविष्कुर्वन्' प्रकटयन् । कपीना—वानराणां शतानि तैरलङ्कृतानाम्, शतशब्दोऽत्रासङ्ख्यातवाची, "शतमपरिमितम्" इति **यादवः** । किंलक्षण राम ? हेलया 'उज्जिहान' उदय गच्छन् उद्यम कुर्वन् । किं कर्त्तुम् ? 'विपुल' विस्तीर्णं 'पारावारं' समुद्र 'तरीतु' उत्तरणाय प्रयत्नवान् । पुन किं कर्त्तुम् ? 'वैरिण' शत्रो 'निशाचारिण' रावणस्य तस्य नाश 'कर्त्तुं' विधातुम् । क इव ? सूर्य इव । 'सूर' सूर्य 'विपुल' महद् 'वियद्' आकाश 'तरीतु' लङ्घयितुं निशाचारिण 'तमस' अन्धकारस्य 'अवसान' निराकरण कर्त्तुं च 'कराणा' किरणानां औद्दाम्य आविष्कुर्वन् उज्जिहानो भवति, उदेतीत्यर्थ । किम्भूतानां कराणाम् ? 'कपि०' कपिशस्य भाव कपिशता—पिङ्गलता तया अलङ्कृतानां—शोभितानाम् । उपमालङ्कार राम-सूर्ययो किरण-बलानां समुद्रा ऽऽकाशयो ॥ ७८ ॥

[ बालबोधिनी ]

**पारावार तरीतुमिति** । स 'रामनामा' राम भवत प्रीतिपूरेण कृत्वा रमयतु । किं कुर्वन् ? कराणामिव बलानामौद्दाम्य 'आविष्कुर्वन्' प्रकटीकुर्वन् । कीदृशानां बलानाम् ? 'कपिशतालङ्कृतानां' कपीनां शतानि कपिशतानि तैरलङ्कृता तेषाम् । स क ? यो राम 'पारावार' समुद्र तरीतु लीलयैव 'उज्जिहानः' वर्द्धमानप्रताप । किं कर्त्तुम् ? निशाचारिणो वैरिण 'अवसान' अन्त कर्त्तुम् । कीदृश पारावारम् ? वियदिव विपुलम् । कीदृशस्य वैरिण ? उत्प्रेक्ष्यते—तमस इव । क इव ? 'सूर इव' यथा 'सूर' सूर्य वियत् तरीतु लीलयैव उज्जिहानो भवति । किं कर्त्तुम् ? निशाचारिणो वैरिण तमस अवसान कर्त्तुम्, 'च' अपर कपिशतालङ्कृतानां कराणां—किरणानां औद्दाम्यमाविष्कुर्वन् । कपिशस्य भाव कपिशता तयाऽलङ्कृतास्तेषाम् ॥ ७८ ॥

*

**नम्राः श्रेयोभरेण प्रचमतिगुरुणा सर्वतः पर्वताद्याः**
**संसारागारपार कति न पतिजनाः सेतुना येन तेरुः ? ।**
**दुर्दैवात् सोऽपि देवः किल कपिकुरलीमुख्यमल्पेन शैले-**
**स्तं यन्नदब्धिमध्ये मधुरिपुरपरिम्रष्टमिष्ट मियाद् वः ॥ ७९ ॥**

१ मान्ना भर्वो भा १ । एतन्नुसारेन बालबोधिनी ॥ २ कपिमुख्यं भा ३ ४ । एतत्पाठमनुसारेण बालबोधिनी ॥

## [ हृदयरञ्जनी ]

**नम्राः श्रेयोभरेणे**ति । 'मधुरिपुः' रामः 'वः' युष्माकं 'अपरिभ्रष्टं' न परिभ्रष्टं अपरिभ्रष्टं–पूर्णमिष्टं क्रियात् । 'किल' इत्याश्चर्ये । सोऽपि देवो दुर्दैवाद्धेतोः । किं कुर्वन् ? 'अब्धिमध्ये' समुद्रमध्ये 'सेतुं बध्नन्' सोपानपरम्परां बधानः । केन कैर्न कैः कारणैः ? 'कपिकुरली०' कपीनां कुरली–सेना तत्र मुख्यः–सुग्रीवः तस्य सख्यं–मित्रं नलः तेन 'शैलैः' पर्वतैः नलेन सेतुं अकारयत इत्यर्थः, "नलं सेतुमकारयत्" इति **रामायणे** । दुर्दैवं किं० ? इत्याह–'येन' रामेण सेतुना कृत्वा 'कति यतिजनाः' कतिपये मुमुक्षवः संसारावारपारं न 'तेरुः' तीर्णा इति । ते के यतिजनाः ? तानाह–'पर्वताद्याः' पर्वतः–नारदमित्रं आद्यो येषां ते पर्वताद्याः समन्तात् तेरुः । किम्भूतास्ते ? 'अतिगुरुणा' बंहीयसां श्रेयसां भरेण 'नम्राः' अवनताः, ये अत्यन्तं गरिष्ठाः गुरवस्तेऽपि येन सेतुना कृत्वा तरन्ति । संसारसमुद्रस्य तरणे सेतुभूतोऽपि इदानीं स्वतरणार्थमम्बुनि सेतुं बध्नातीत्याश्चर्यम् । 'ध्रुवं' इति निश्चये उत्प्रेक्षायां वा । विरोधालङ्कारः, विस्मयस्थायी रसः, अद्भुतस्योदयः, प्रसादो गुणः ॥ ७९ ॥

## [ बालबोधिनी ]

**नाम्ना श्रेयो** इति । सः 'मधुरिपुः' रामः 'वः' युष्माकं [ 'अपरिभ्रष्टम्' ] अपरिमितं बहु 'इष्टं' वाञ्छितं क्रियात् । किं कुर्वन् ? सोऽपि 'देवः' रामः दुर्दैवाद् दुष्टप्राक्तनात् 'किल' इति सत्ये 'कपिखुरलीमुख्यसख्येन' सुग्रीवेण सह 'शैलैः' पर्वतैः कृत्वा 'अब्धिमध्ये' समुद्रमध्ये 'तं' सेतुं बध्नन् । स कः ? तं कम् ? 'येन नाम्ना' यस्य सेतुनामस्वरूपिणा सेतुना पर्वताद्या यतिजनाः 'सर्वतः' परितः 'संसारावारपारं' संसारस्वरूपिणं समुद्रं 'कति' कियन्तो न तेरुः ? अपि तु तेरुरेव । कीदृशेन नाम्ना ? 'श्रेयोभरेण,' भद्रभरेण । अपरं कीदृशेन ? 'ध्रुवमतिगुरुणा' , निश्चितं सर्वस्मात् श्रेष्ठेन । कपयश्च खुरल्यश्च तेषां मुख्यस्तस्य सखित्वेन ॥ ७९ ॥

•

सद्यः स त्वघं यो मघवदवरजः सागरोपान्तवर्त्ती
मूर्त्याऽकीर्त्या च यस्मिन् जगदतिदयिते दुर्दशां दर्शयित्वा ।
भीतो भूलोकशापदिव विधिरुदधौ तारयंस्तूलगत्या
स्थूलानां प्रस्तराणां समुदयमदयोऽप्यानुकूल्यं चकार ॥ ८० ॥

---

१ मूर्त्या कीर्त्या च यस्मिन् जगदतिभयिने मा १-८ । एतत्पाठानुसारेण बालबोधिनी ॥

[ हृदयरञ्जनी ]

**सद्यः स खण्डयतु वः इति।** 'सः' रामो वोऽघं सद्यः 'धत्तु' खण्डयतु। स कः? किल मघवतः—इन्द्रस्य अवरजः—कनीयान् भ्राता, कश्यपसुतत्वात्, दशरथो हि कश्यपावतारः। पुनः किं०? 'सागरोपान्तवर्ती' समुद्रतटे वर्तमानः। स इति कः? 'यस्मिन्' रामे अदयोऽपि विधिः 'आनुकूल्यं' अनुकूलत्वं 'चकार' विदधे, पश्चादिति शेषः। किं कुर्वन् विधिः? तूलगत्या मन्देन वानरेण 'स्थूलानां' महतां प्रस्तराणां 'समुदयं' समूहं 'उदधौ' समुद्रे तारयन्। तत्रोत्प्रेक्षते 'भूर्लोकशापाद् भीत इव' भूर्लोकस्य शापः—नाशः तस्माद् 'भीत इव' भयाकुलः 'क्रुद्धो रामो जगद् धक्ष्यति' इति भयं तस्मादित्यर्थः। किम्भूते यस्मिन्? 'जगदतिदयिते' जगति—लोके अतिक्रान्ता—गता दयिता—वल्लभा यस्य तस्मिन्। किं कृत्वा? 'मूर्च्छा' मूर्छीभूतया 'अकीर्त्या' अयशसा 'दुर्दशां दर्शयित्वा' दुरवस्थां प्रापय्य, पूर्वं तावद् दुर्दशां रामे संयोज्य पश्चात् कृपालुः सन् आनुकूल्यं विदधे ॥ ८० ॥

[ बालबोधिनी ]

सद्यः स इति। 'सः' रामः वः अघं सद्यः 'धत्तु' अवखण्डयतु। कीदृशः? 'मघवदवरजः' इन्द्रानुजः। अपरं मूर्च्छा कीर्त्या च सागरोपान्तवर्ती, अन्येषां यशस्विनां राज्ञां कीर्तिः सागरोपान्तवर्तिनी भवति, रामस्तु मूर्च्छा—स्वस्वरूपेणापि सागरोपान्ते गतवान्। स कः? यस्मिन् 'जगदतिशयिते' जगद्गुरौ रामे दुर्दशां दर्शयित्वा 'विधिः' ब्रह्माऽपि 'उदधौ' समुद्रे स्थूलानां 'प्रस्तराणां' स्थूलानां 'समुदयं' समूहं तूलगत्या तारयन् सन् 'अदयोऽपि' निर्दयोऽपि आनुकूल्यं चकार। कीदृशः? उत्प्रेक्षते—भूर्लोकशापाद् भीत इव ॥ ८० ॥

•

पापाद् यः क्षोणिजायाः पतिरतिविपुलं पश्यतां सेतुमब्धौ,
बद्धं यस्य प्लवङ्गैर्वियति विरतामेवमासीद् वितर्कः।
अम्भोरूपस्य शम्भोः सरलतनुरसौ किं जटैका? किमंहः-
श्छाया धूपविभ्रमस्य? ग्रसितुमसुहृदं किं स्थितः कालसर्पः? ॥८१॥

[ हृदयरञ्जनी ]

पापाद् यः क्षोणीति। स. 'क्षोणिजायाः पतिः' सीतापतिः रामो वः 'पापात्' रक्षतु। स कः? 'वियति विरतां' सिद्धादीनां 'एवं' इत्थं 'वितर्कः' वितर्कः

---

१ सेतुबन्धं बद्धं ... [illegible] ॥

'आसीद्' अभूत्। किम्भूतानाम्? 'यस्य' रामस्य 'प्लवङ्गैः' नलमुख्यैः वानरैः 'विपुल' विस्तीर्णे 'अब्धौ' समुद्रे बद्धं सेतुं 'पश्यता' विलोकयताम्। इत्थमिति किम्? 'असौ' सेतुः किं वा शम्भोरेका जटा?। किम्भूतस्य शम्भोः? 'अम्भोरूपस्य' जलरूपस्य, परमेश्वरस्याष्टमूर्तित्वात्। तथा चोक्तं कालिदासेन—

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिताऽव्याप्यविश्वम्।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥
[ अभिज्ञानशाकुन्तले अं० १ श्लो० १ ] इति।

किम्भूता जटा? 'सरलतनुः' सरला—दीर्घा तनुः—आकारो यस्याः सा। आहोस्वित् 'त्रैविक्रमस्य' विष्णोः सम्बन्धिनः 'अङ्घ्रेः' चरणस्य 'छाया' प्रतिबिम्बम्?। 'वा' अथवा किं 'असुहृद्' रावणं ग्रसितुं स्थितः 'कालसर्पः' सर्परूपेण काल एव वर्त्तते, इति सेतुं दृष्ट्वा नभश्चरा देवा वितर्कयामासुरिति वाक्यार्थः। संशयोऽलङ्कारः, "तदनुक्तौ तु संशयः" इति। वितर्को व्यभिचारी अङ्गरसः ॥ ८१ ॥

[ बालबोधिनी ]

पायाद् वः क्षोणीति। स 'क्षोणिजायाः पतिः' रामः वः पायात्। स कः? यस्य रामस्य 'प्लवङ्गैः' वानरैः बद्धमतिविपुलं सेतुबन्धं पश्यतां 'वियति विचरतां' देवानां 'एवं' अमुना प्रकारेण 'वितर्कः' विचारः आसीत्। एवं कथम्? किं अम्भोरूपस्य 'शम्भोः' महादेवस्य सरलतनुः असौ एका जटा? किं त्रैविक्रमस्य 'अङ्घ्रेः' चरणस्य छाया वा? अथ किं 'असुहृदं' रावणं ग्रसितुं कालसर्पः स्थित इव ॥ ८१ ॥

•

वल्गन्निःसीमभीमं सरभससरभं भैरवारम्भरम्भं
संरम्भस्फारतारं तरलशतवलिभ्राजमानाञ्जनेयम्।
उन्मीलन्नीलनीलं गुरुमदकुमुदं सम्मदामन्दमैन्दं
योऽग्रे सुग्रीवसैन्यं व्यधित युधि दशग्रीवजिद् वः स पायात् ॥८२॥

[ हृदयरञ्जनी ]

वल्गन्निःसीमेति। 'सः' रामो वः पायात्। किंलक्षणः? 'दशग्रीवजिद्'

१ °रम्भारम्भस्फारतारं तरलशतवलिभ्रा° भा ३ ४। एतत्पाठानुसारेण बालबोधिनी ॥

दश ग्रीवा—कण्ठा यस्य स त रावण जितवान्। स क ? य 'युधि' सङ्ग्रामे 'अग्रे' पुरस्तात् सुग्रीवसैन्य 'व्यचित' निदधे, अग्रे सुग्रीवसैन्य कृत्वा युद्धाय चचालेति। सर्वाण्य न्यानि सैन्यविशेषणानि। किम्भूतम्? नि सीम यथा स्यात् तथा वल्गत्। पुनर्भीम—भयङ्करम्। पुन 'सरभस०' रभसाश्च ते सरभा—वानरविशेषा तै सह वर्त्तमान सरभससरभम्। पुन 'भैरवा०' भैरव—भयङ्कर आरम्भ—उद्यमो यस्य स भैरवारम्भ रम्भो नाम सुभटो यस्मिन् तत्। पुन 'संरम्भस्फारतार' सरम्भेण—कोपेन स्फारास्तारा—कनीनिका [यस्मिन् तत्], अथवा कोपेन स्फार—महान् तार—ताराख्य वानरसुभटो यत्र, वीररसाविर्भावात् स्फार, इत्यर्थ। पुन 'तरलशत०' तरला—चपला शतवल्यो यस्य, शतवलि—चक्र तद्वद् भ्राजमान आञ्जनेय—हनुमान्, यत्र तत्। अथवा तरलशतवल्यो मुखे भ्राजमाना यस्य एवविधो हनुमान्, वलिमुखत्वाद् वानरस्य। पुन उन्मीलन्ती—प्रकाशमाना लीला—युद्धविलासो यस्य स नील—नीलनामा सुभगो यत्र तत्। पुन 'गुरु०' गुरुमद कुमुदो यत्र तत्। पुन सम्मद—सगर्व अमन्द—महान् मैन्दो यत्र तत्। तत एव वानरसुभटै शोभमान सैन्य पुरस्तात् कृत्वा जगामेत्यर्थ। उत्साहस्थायी वीरो रस, अमर्षादि व्यभिचारिभावानामुदय, छेकानुप्रास, कर्तृकारकदीपकालङ्कार ॥ ८२ ॥

## [ बालबोधिनी ]

वल्गन्नि सीमेति। स 'दशग्रीवजिद्' रावणजिद् रामो व पायात्। स क ? 'य' राम 'युधि' सङ्ग्रामे 'अग्रे' पुरत सुग्रीवसै य 'व्यचित' कृतवान्। अत पद्ये सर्वाणि सै यविशेषणानि। कीदृक् सै यम्? 'वल्गन्नि सीमभीम' वल्गन् नि सीम—निर्मर्यादा भीम—वानरो यस्मिन् सै ये तत्तथा। 'सरभससरभ' सरभस—सवेग सरभो यस्मिन्। 'भैरवारम्भ रम्भ' भैरव—भयङ्कर आरम्भो यस्य, भैरवारम्भो रम्भो यस्मिन्। 'संरम्भस्फारतार' सरम्भेण—कोपेन आस्फार—वृद्ध तारो यस्मिन्। 'तरलशतवलि' तरल—चञ्चल शतवलिर्य स्मिन्। 'भ्राजमानाञ्जनेय' भ्राजमान—देदीप्यमान आञ्जनेय—हनुमान् यस्मिन्। 'उन्मीलल्लीलनील' उन्मीलन्ती लीला यस्य, उन्मीलल्लीलो नीलो यस्मिन्। 'गुरुमदकुमुद' गुरु मद कुमुदो यस्मिन्। 'सम्मदामन्दमैन्द' सम्मदेन आमन्द—दर्पमन्दो मैन्दो यस्मिन् तत् सम्मदामन्दमैन्दम्॥ ८२॥

•

**देवो दीव्यन् सुवेलाचलभुवि कपिभिर्भूतपो यः स भूयाद् परयाऽऽदेशेन गत्वा रिपुरिति जगदे मोऽमन्दोऽङ्गदेन।**

कामार्थं यातुधानाधिप ! परिहरसे धर्ममर्थं च कस्माद् ?
वैदेहीं देहि [1]भर्त्रे त्वमथ निजकुलस्याऽऽशु तोयाञ्जलिं वा ॥८३॥

[ हृदयरञ्जनी ]

**देवो दीव्यन्निति।** सः 'देवः' रामनामा वो भूतये भूयात्। किंलक्षणः? कपिभिः सह सुवेलाचलभुवि 'दिव्यन्' क्रीडन्। स कः? 'यस्य आदेशाद्' यस्य रामस्याऽऽज्ञया 'अङ्गदेन' वालिपुत्रेण लङ्कां गत्वा 'रिपुः' रावणः इति 'जगदे' उक्तः। किम्भूतो रिपुः? 'मोहमन्दः' मोहेन–कामातुरतया मन्दः–मूढः। इतीति किम्? 'हे यातुधानाधिप!' रावण! त्वं कामार्थं कस्माद् हेतोः धर्ममर्थं च 'परिहरसे' त्यजसि? याभ्यां धर्मोऽर्थाभ्यां साधु सर्वं पुरुषार्थजातं साधयितुं क्रमते, कामः क्षणध्वंसी, तदर्थमपरे इति। अतो वैदेहीं 'भर्त्रे' रामाय 'देहि' समर्पय, यदि नार्पयसि तर्हि [ 'निजकुलस्य' ] स्वकुलस्य राक्षसकुलस्य 'आशु' शीघ्रं तोयाञ्जलिं देहि, उभयोर्मध्ये यद् रोचते तदाशु विधीयतामिति सः 'जगदे' अभिहितः ॥ ८३ ॥

[बालबोधिनी]

**देवो दीव्यन्निति।** सः 'देवः' रामः वः 'भूतये' समृद्धये भूयात्। किं कुर्वन्? 'सुवेलाचलभुवि' लङ्कायां कपिभिः सह 'दीव्यन्' क्रीडन्। स कः? यस्य 'आदेशेन' आज्ञया गत्वा 'अङ्गदेन' वालिसुतेन 'रिपुः' रावणः इति 'जगदे' उक्तः। कीदृशः? 'मोहमन्दः' मोहेन मन्दः–हीनबुद्धिः। इतीति किम्? 'हे यातुधानाधिप!' रावण! कामार्थं धर्ममर्थं च कस्मात् परिहरसे? 'वैदेहीं' सीतां 'भर्त्तुः' रामस्य 'देहि' प्रयच्छ। अथवा अस्य 'निजकुलस्य' स्वकीयराक्षसकुलस्य 'तोयाञ्जलिं देहि' दाहाञ्जलिं देहि ॥८३॥

युक्तैवाऽऽप्तोपदेशश्रवणबधिरता कोणपेन्द्रस्य यस्मा-
ज्जातोऽसौ विश्रवस्तः पुनरिदमसकृन्मोहमानोऽपि जाने।
द्विर्विंशत्या यदेष स्थितमपि पुरतो मर्त्यमूर्त्या स्वमृत्युं
नापश्यद् ध्वस्तवालिं विधुरितजलधिं यं स वः केशवोऽव्यात् ॥८४॥

[ हृदयरञ्जनी ]

**युक्तैवाप्तोपदेशेति।** स केशवोऽव्यात्। 'असौ' रावणः 'यं' एनं रामं 'स्वमृत्युं पुरतः स्थितं नापश्यद्' आत्मनो मृत्युं–हन्तारं न दृष्टवान्। कया? 'द्विर्विंशत्या'

१ कामार्थं या' भा १-२-३-४। एतदनुसारेण बालबोधिनी॥ २ भर्तुस्त्वमथ निजकुलस्यास्त तो' भा १-२-३-४। एतदनुसारेण बालबोधिनी॥

दृशा विंशति तयाऽपि, य किल द्विलोचनो भवति सोऽप्यबोध्यमानोऽवस्थितोऽपि आगत मृत्यु जानाति, असौ पुन विंशतिलोचनै पश्यन्नपि अथाङ्गद-मन्दोदरीप्रभृतिभिर्बहुधा बोध्यमानोऽपि स्ववधार्थमवतीर्णं राम-लक्ष्मण मृत्यु न ज्ञातवान्। कथ बोध्यमान ? हे रावण! पश्य 'मर्त्यमूर्त्या' मनुष्यरूपेण 'पुरत' अग्रत स्थित राम मृत्युमिति। पुन किंलक्षणम्? ध्वस्त–हतो वालिर्येन स तम्। येन वालिना शतश बद्धोऽसि तस्य हन्ताऽसौ राम, त्व कियत्? इति। पुन 'विधुरित०' बद्धपयोनिधिम्, यस्य जलधेर्जलेन उज्जृम्भसे–इति बोध्यमान। किञ्चाहमिति जाने–अस्य कौणपेन्द्रस्य आप्तोपदेशश्रवणबधिरता 'युक्तैव' नान्यथा–सत्यैव। आप्त–यथार्थोपदेष्टा, तस्योपदेश–कथन अव्यभिचारिवाक्य तस्य श्रवणे बधिरता–बाधिर्यं यस्मादसौ 'विश्रवसो जात' विश्रवा–पौलस्त्य, अथ विश्रवा–विगते श्रवसी–कर्णौ यस्य स तस्मात्, कर्णरहिताज्जातो बधिरो भवतीति नाश्चर्यम्। 'असकृद्' अनेकवारम्। कारणगुणा कार्ये सम्बध्य अनुमितिरलङ्कार। मोहो भावयो सन्धि, जडता-गर्वयोश्च ॥ ८४ ॥

[ बालबोधिनी ]

युक्तैवाप्तोपदेशेति। स 'केशव' राम व अव्यात्। स क? अङ्गद कथयति–हे राक्षसा! अस्य कौणपेन्द्रस्य' रावणस्य 'आप्तोपदेशश्रवणबधिरता' हितकथनश्रवण बधिरता युक्तैव, यस्माद् 'असौ' कौणपेन्द्रो रावण विश्रवसो जात, अन्योऽपि बधिराद् जातो बधिर एव भवति तथाऽयमपीति युक्तम्। पुनरहमिद 'असकृत्' पुन पुन 'ऊहमान' विचार्यमाणोऽपि न जाने, इद कियत्?। एव रावण 'द्विविंशत्या कृत्वा अक्ष्णा विश या 'पुरत' अग्र स्थितमपि 'मर्त्यमूर्त्या' मनुष्यरूपेण य राम 'ध्वस्तवालि' जितवालि 'विधुरितजलधि' विकलाकृतजलधि राम 'स्वमृत्यु' आत्ममृत्यु नापश्यत् ॥ ८४ ॥

*

देयादायोधनस्थ[1] स धनमतनु च श्रीधरो यत्र कोपात्
कुर्वाणे बाणवृष्ट्या प्रलयजलधरासारसृष्टि[2] समन्तात्।
वाहिन्या वानराणा रयरचिततरुक्षेपयोत्क्षिप्यमाणः
प्रभ्रश्यद्बन्धुवर्गोपलविकलबलः शैलवद् रावणोऽभूत् ॥ ८५ ॥

[ हृदयरञ्जनी ]

देयादायोधनस्थ इति। 'आयोधनस्थ' सङ्ग्रामस्थ 'श्रीधर' राम 'व'

1 °सारसृष्टि भा १ ३ ४। एतत्पाठानुसारेण बालबोधिनी ॥ 2 °वसुवृष्ट्या° आ १ २ ३-४। एतत्पाठानुसारेण बालबोधिनी ॥

युष्मभ्य 'अतनु' बहुल 'धन' कनकादि 'देयाद्' दद्यात्। स क ' रावण 'शैलवद् अभवत्' पर्वत इव जात । क सति ' 'यत्र' यस्मिन् रामे 'कोपात्' क्रोधाद् 'बाणवृष्ट्या' बाणाना वृष्टि तया 'प्रलयजलधरासारसृष्टिं' प्रलयकाले यो जलधर —मेघस्तस्य आसार —धारासम्पात तस्य सृष्टिं—मोक्षनिर्माण कुर्वाणे सति, यथा प्रलयकाले मेघो धारासम्पात पर्वते करोति तथाऽय राम रावणे बाणवृष्टिं वर्षतीति। स किंलक्षण रावण ' वानराणा 'वाहिन्या' सेनया 'उत्क्षिप्यमाण ' ऊर्ध्वं क्षिप्यमाण —प्रेर्यमाण । किम्भूतया सेनया ' 'रयरचि०' रयेण रचित —कृत तरूणा क्षेपो यया सा तया। पुन कथम्भूतो रावण ' 'प्रभ्रश्यद्बन्धु०' प्रभ्रश्यन्—पलायमानो बन्धुवर्ग —गोत्रसमूहो यस्य स, उपलै — पाषाणै विकल बल—सैन्य यस्य स, प्रभ्रश्यद्बन्धुवर्गश्चासो उपलविकलबलश्च स । पर्वत प्रलयकाले रयरचिततरुक्षेपया 'वाहिन्या' नद्या क्षिप्यमाणो भवति, प्रभ्रश्यन्त बन्धुवर्गायमाणा उपला—पाषाणा तैर्विकल बल—सामर्थ्यं यस्य स । राम-मेघयो पर्वत रावणयो श्लेष । पदश्लेषालङ्कार उपमा वा ॥ ८५ ॥

[ बालबोधिनी ]

**देयादायोधने**ति। स 'आयाधनस्थ ' सङ्ग्रामस्थ 'श्राधर ' राम व 'अतनु' बहुल धन देयात्। स क ' 'यत्र' राम कोपाद् बाणवृष्ट्या कृता 'समन्तात्' सर्वत प्रलयजलधरासारवृष्टिं कुर्वाणे सति रावण 'शैलवत्' पर्वतवद् अभूत्। कीदश ' वानराणां वाहिन्या' सेनया 'उत्क्षिप्यमाण ' उत्क्षिप्यमान । अपर कीदश ? प्रभ्रश्यन्बन्धुवर्गोपलविकलबल ' बन्धूना वर्गा —समूहा प्रभ्रश्य त —पत त बन्धुवर्गा एव उपलास्तैर्विकल—कला रहित बल—सैन्य यस्य स तादश । कीदशया वाहिन्या ' 'रयरचिततरुक्षेपया' रयेण—वेगेन रचित —कृत तरूणा उत्क्षेपा यया सा तया। प्रलय यो जलधर —मेघ तद्वद् आसारवृष्टि — वेगवती वृष्टि ताम् ॥ ८५ ॥

*

कुर्वाणो वारबाणावरणमपि रणप्राङ्गणे बाणघातैः
निष्प्राण कोणपौघ लघयतु स रघुग्रामणीरामय व ।
मित्रस्यैवोपकर्तुं पवनतनुभुवस्तत्पितृप्राणपाशान्
रक्ष पाशप्रयुक्तान् निशि पतगपतिस्त्रासयामास यस्मात् ॥८६॥

---

१ वारबाणा वर° एतत्पाठानुसारेण बालबोधिनी। वानराणां वर° भा ३ ४॥ २ रिपुपाशयुक्तान् भा १ २। °पितु प्राणनाशान् भा ३ ४, एतदनुसारेण बालबोधिनी ॥

[ हृदयरञ्जनी ]

**कुर्वाणो वारवाणेति।** स 'रघुग्रामणी' रघुश्रेष्ठो राम 'व' युष्माक 'आमय' रोग 'रघयतु' स्फोटयतु। किम्भूत ? 'रणप्राङ्गणे' रणभूमौ 'वारवाणावरण' वारवाण – कम्बुकस्तेन आवरण–आच्छादन कुर्वाण। अन्यद् बाणघाते 'कोणपौघ' राक्षससमूहं 'निःप्राण' निर्गतप्राणमपि कुर्वाण। स क ? 'पतगपति' गरुड 'यस्माद्' रामाद् 'निशि' रात्रौ 'तत्पितृप्राशपाशान्' तस्य–हनुमत पिता–वायु तस्य प्राशा –भक्षका त एव पाशा तान् नागपाशान् 'त्रासयामास' भीषयति स दूरीचकार। किम्भूतान् ? 'रक्ष पाशप्रयुक्तान्' अप्रशस्तो रक्ष रक्ष पाश तेन प्रयुक्तान्–मेघनादप्रहितान्। उत्प्रेक्षते–किं कर्तुमिव ? 'मित्रस्य' सुहृद 'पवनतनुभुव' हनुमत उपकर्तुमिव, पितृद्वेषिणो नागान् हत्वा उपचक्रे इति। अनुप्रास उत्प्रेक्षा ॥ ८६ ॥

[ बालबोधिनी ]

कुर्वाणो इति। स 'रघुग्रामणी' रामो व॰ 'आमय' रोग 'लघयतु' अल्पीकरोतु। कीदृश ? 'रणप्राङ्गणे' सङ्ग्रामाङ्गणे बाणघाते कृत्वा 'कोणपौघ' रक्षसां समूह निष्प्राण कुर्वाण। अपर रणप्राङ्गणे 'वारणाना' हस्तिनामपि 'वरण' आच्छादन कुर्वाण॰। स क॰ ? 'यस्माद्' रामात् 'पतगपति॰' गरुड मित्रस्य 'पवनतनुभुव' हनुमत उपकर्तुमिव 'तत्पितु' हनुमत्पितुर्वायो 'प्राणनाशान्' सर्पान् त्रासयामास। कीदृशान् सर्पान् ? 'निशि' रात्रौ 'रक्ष पाशप्रयुक्तान्' रक्षसा पाशत्व प्रयुक्तान् ॥ ८६ ॥

•

लक्ष्मी लक्ष्मीपतिर्वः प्रथयतु मथिते लक्ष्मणे शत्रुशक्त्या
शोकार्त्ते यत्र साकं विलपति पलभुग्वानराभ्यां सखिभ्याम्।
सर्वेषामेव तेषाममरपुरमभि प्रस्थितानां तदानी-
मानीय द्रोणमद्रिं सरभसमकरोन्मारुतिः मार्गरोधम् ॥ ८७ ॥

[ हृदयरञ्जनी ]

**लक्ष्मीं लक्ष्मीति।** स लक्ष्मीपति 'व' युष्माक लक्ष्मी 'प्रथयतु' पृथक्करोतु। 'मारुति' मरुतस्यापत्यं मारुति–हनुमान् द्रोणमद्रिमानीय तेषामेव सर्वेषां वानराणां 'मार्गरोध अकरोद्' मार्गमरुधत्। किम्भूतानां तेषाम् ? 'तदानीं' तस्मिन् सङ्ग्राम-समये 'अमरपुरमभि प्रस्थितानां' स्वर्गं प्रति चलितानाम्, सङ्ग्रामे मृतानां हि स्वर्गगति ततो रुरोध 'सरभस' तूर्णं यथा भवति क्रियाविशेषणम्। क सति ? 'यत्र' रामे सखिभ्यां

'पलभुग्वानराभ्यां' पलं भुङ्क्ते पलभुग्-विभीषणः वानरः-सुग्रीवः ताभ्यां साकं 'विलपति सति' विलापं-रोदनं कुर्वति सति। किंलक्षणे रामे? 'शोकार्ते' शोकपीडिते। क सति? 'शत्रुशक्त्या' वैरिशक्तिप्रहारेण लक्ष्मणे मथिते सति। इन्द्रजिता शक्त्या लक्ष्मणस्ताडितोऽभूत् तदा हनुमान् द्रोणाद्रिमानीय लक्ष्मणतद्वानरांश्च विशल्यानकरोदिति सहोक्तिध्वनितोऽर्थः, यथा कश्चित् गच्छतो लोकस्य पर्वतपातेन मार्गं रुणद्धीति ॥ ८७ ॥

[ बालबोधिनी ]

लक्ष्मीमिति। स लक्ष्मीपतिः सीतापती रामः वः लक्ष्मीं प्रथयतु। स कः? यत्र रामे लक्ष्मणे शत्रुशक्त्या 'मथिते' मूर्च्छिते सति 'शोकार्ते' दुःखेन पीडिते पलभुग्वानराभ्यां विभीषण सुग्रीवाभ्यां सखिभ्यां साकं विलपति सति 'मारुतिः' हनुमान् 'तदानीं' तस्मिन् अवसरे द्रोणमद्रिमानीय 'अमरपुरं' इन्द्रपुरम् 'अभि' संमुखं प्रस्थितानां सर्वेषां एव तेषां वानराणां मार्गरोधं 'मार्गमुद्रणं' अकरोत्, कृतवान् पलभुक् वानरश्च तौ विभीषणः सुग्रीवश्च ॥ ८७ ॥

•

उत्तीर्णस्तूर्णमब्धिः क्षितिदुहितुरभिज्ञानमानीतमक्षो
रक्षो जघ्ने च भग्नं वनमनलभयं लम्भिता येन लङ्का।
सौमित्रिः शस्त्रभिन्नः पुनरधिगमितः प्राणितं तत् कवेः किं
कृत्वा तस्यानृणः स्यामिति हरिरघुनाऽपीद्धचिन्तोऽवताद् वः॥८८॥

[ हृदयरञ्जनी ]

उत्तीर्णस्तूर्णमिति। हरिः 'व' युष्मान् अवतात्। किंलक्षणः 'इति इद्धचिन्त.' इति-अमुना प्रकारेण इद्धा-समृद्धा चिन्ता-विचारो यस्य स इद्धचिन्तः। इतीति किम्? 'तस्य' हनुमत तत् किमस्ति यत् कृत्वा कपे 'अनृणोऽहं स्या' अनृणीभवेयम्' तादृशं मम नास्तीति चिन्ताकुल इति भाव। तस्य कस्य? 'येन' हनुमता तूर्णमब्धि 'तीर्ण' अतारि। अन्यत् 'क्षितिदुहितुः' सीतायाः 'अभिज्ञानं' चूडारत्नमानीतम्। 'च' अन्यद् 'अक्षो रक्ष' अक्षयकुमारो रावणपुत्रः 'जघ्ने' हतः। तथा 'वनं' रावणोद्यानं 'भग्नं' अभाजि। अन्यद् लङ्का 'अनलभयं लम्भिता' दग्धा। 'च' अन्यत् शस्त्रभिन्न 'सौमित्रि' लक्ष्मण पुनरपि 'प्राणितं' जीवितं 'समधिगमित.' प्रापित। एवमुपकुर्वतः कपेः येन प्रत्युपकार. स्यात् तद् नास्तीत्यर्थः। चिन्ताऽत्र व्यभिचारी भावोऽङ्गी रसः। दीपकमालालङ्कारः॥ ८८ ॥

[ बालबोधिनी ]

उत्तीर्णस्तूर्णमिति। हरिर्वः अवतात्। कीदृशः? अहं 'तत्कपेः' तस्य कपेः-हनुमतः किं कृत्वा अनृणः स्याम्? इति कृत्वा 'अधुनाऽपि' इदानीमपि 'इद्धचिन्तः' इद्धा-समृद्धा चिन्ता यस्य स तथा तस्य। कस्य? 'येन' हनुमता तूर्णमब्धिरुत्तीर्णः, अपरं येन 'क्षितिदुहितुः' सीतायाः 'अभिज्ञानं' चिह्नं आनीतम्, अपरं येन 'अक्षो रक्षो जघ्ने' अक्षनामा राक्षसः ताडितः, अपरं येन 'वनं भग्नं' वाटिका उन्मूलिता, अपरं येन 'लङ्का अनलभयं लम्भिता' लङ्कायाः अग्नेः सकाशाद् भयं उत्पादितम्, अपरं येन 'सौमित्रिः' लक्ष्मणः 'शस्त्रभिन्नः' मृतः सन् पुनः 'प्राणितः' जीवितः आधिगमितः ॥ ८८ ॥

•

युष्माकं शुष्मशाली विदलयतु विभुर्जानकीजानिरेनः
सेनां पश्यन्नरीणां रणभुवि कपिभिर्मार्यमाणामरीणैः।
अस्कन्नस्कन्धबन्धद्युतिभरमपरिक्षिप्तशाखं मरुद्भि-
र्यस्तूर्णं कुम्भकर्णक्षितिरुहमदहत् तीव्रहेतिः शिखीव ॥ ८९ ॥

[ हृदयरञ्जनी ]

युष्माकं शुष्मशालीति। जानकीजानिः सः 'विभुः' रामः युष्माकं 'एनः' पापं विदलयतु। किंलक्षणः? शुष्मवद्-वह्निवत् शालते इति शुष्मशाली वह्निसमस्तेजसा यः रामः 'तूर्णं' शीघ्रं कुम्भकर्णक्षितिरुहं 'अदहत्' ददाह। किंलक्षणम्? 'अस्कन्न०' अस्कन्न-अक्लिष्टः स्कन्धबन्धः-अंसप्रदेशस्तस्य द्युतिभरः-कान्तिसमूहो यस्य तम्। किम्भूतम्? 'मरुद्भिः' देवैरलूना शाखा-भुजा यस्य तम्। किंलक्षणो रामः? 'तीव्रहेतिः' तीव्रा हेतिः-शस्त्रं यस्य सः। क इव? यथा 'शिखी' वह्निः वृक्षं दहति। किम्भूतो वह्निः? 'तीव्रहेतिः' द्रुतसद्ज्वालः। किम्भूतं वृक्षम्? अस्कन्न-प्रकारान्तरेण व्यवस्थितः मूलशाखास्कन्धबन्धः तस्य द्युतिभरः-शोभातिशयो यस्य तं तथा 'मरुद्भिः' वायुभिः 'अपरिक्षिप्त०' अपातितविटपम्। किं कुर्वन् रामो ददाह? रणभुवि अरीणां सेनां 'पश्यन्' विलोकयन्। किंलक्षणां सेनाम्? 'अरीणैः' श्रेष्ठैः कपिभिर्मार्यमाणाम्। उपमा ॥ ८९ ॥

[बालबोधिनी]

युष्माकमिति। सः 'विभुः' रामः युष्माकं 'एनः' पापं 'विदलयतु' चूर्णीकरोतु। कीदृशः? 'शुष्मशाली' बलवान्। पुनः कीदृशः? 'जानकीजानिः' सीतापतिः, जानकी

१ °परिशक्तशाखं भा १ ॥

'अथ' तदनन्तरं लक्ष्मणेन 'त्रिदशपतिजितं' इन्द्रजितं निघ्नता सता यः क्लेशः 'शोकशोचिः' शोकरूपोऽग्निः निचिक्षिपे। पश्चात् 'कीशाधीशेन' सुग्रीवेण गुरुगिरिशिखरैर्घ्नता सता 'अमर्षवह्निः' यः क्रोधरूपो वह्निश्चिक्षिपे तैर्न दग्धः ॥ ९० ॥

*

पुण्याहारम्भसन्ध्यावसरमिव पुरः शोणितैः कोणपानां
दृष्ट्वा कष्टान्धकारं विरतमिव विदन्नस्तु स श्रेयसे वः।
रक्षोराजेन सार्द्धं हरधरणिधरोद्धारधीरेण युद्ध-
क्रीडा व्रीडाय नाभूदवगणितगणाधीशचापस्य यस्य ॥ ९१ ॥

[हृदयरञ्जनी]

पुण्याहारम्भेति। स वः 'श्रेयसेऽस्तु' कल्याणाय स्यात्। किं कुर्वन्? 'कष्टान्धकारं' कष्ट-दुःखमेव अन्धकारं तद् 'विरतमिव' शान्तमिव 'विदन्' जानानः। किं कृत्वा? 'कोणपानां' राक्षसानां 'शोणितैः' रुधिरैः 'पुरः' अग्रे पुण्याहारम्भसन्ध्यावसरं आयातमिव दृष्ट्वा। पुण्यं च तद् अहश्च पुण्याहं तस्य आरम्भः-प्रातःकालः तस्य सन्ध्याया अवसरं समयं आगतमिव निरीक्ष्य दुःखकारीणि दिनानि गतानि सुखकारीण्यागतानीति भावः। स कः? यस्य 'युद्धक्रीडा' सङ्ग्रामरसेलनं 'व्रीडाय' लज्जायै नाभूत्। किंलक्षणा युद्धक्रीडा? 'रक्षोराजेन' रावणेन सार्द्धं क्रियमाणा। किम्भूतेन? 'हरधरणि०' हरधरणिधरः-कैलासः तस्योद्धारः-ऊर्ध्वचलनं तत्र धीरः-निश्चलः तेन। किम्भूतस्य? यस्य 'अवगणित०' अवगणितः-अवमानितः गणाधीशः-महेशः तस्य चापः-धनुर्येन स तस्य। उभावपि सदृशाविति समपराक्रमौ, अत एव लज्जा नाभूदित्यर्थः ॥ ९१ ॥

[बालबोधिनी]

पुण्याहारम्भेति। 'सः' रामः वः श्रेयसेऽस्तु। कीदृशः? 'पुरः' अग्रे 'कोणपानां' राक्षसानां शोणितैः कृत्वा पुण्याहारम्भसन्ध्यावसरमिव दृष्ट्वा 'कष्टान्धकारम्' कष्टरूप अन्धकारं 'विरतं' गतमिव विदन्। पुण्यं च तद् अहश्च पुण्याहम्, अह्नोऽदन्त व "राजाहःसखिभ्यष्टच्" [पाणिनि० ५-४-९१] इति समासान्तटच्प्रत्ययविधानात्, तस्य आरम्भसन्ध्या-प्रातःसन्ध्या तस्या अवसरः उत्सवः पुण्याहारम्भसन्ध्यावसरम्। स कः? 'यस्य' रामस्य 'रक्षोराजेन' रावणेन सह युद्धक्रीडा अभूत्, 'च' अपर 'व्रीडा' लज्जा च नाभूत्। राजन्-शब्दस्यापि अदन्तत्वं "राजाहःसखिभ्यः" [पाणिनि० ५-४-९१] इत्यादिना। कीदृशस्य रामस्य? 'अवगणितगणाधीशचापस्य' अवगणित-तिरस्कृत महादेवस्य चाप-धनुर्येन स

१ क्रीडा च ना॰ भा १-४। एतदनुसारेण बालबोधिनी ॥

तथा तस्य। कादशेन रक्षोराजेन 'हरधरणिधरोद्धारधीरेण' हरस्य धरणिधर –कैलाश तस्योद्धारण धीर तेन, उभयोरपि ईश्वराधिकत्वाद् युद्धक्रीडा बभूव, न क्रीडा। अन्यत्र त्वनयोक्रीडैव तुल्यपुरुषार्थ नाभावात् ॥ ९१ ॥

*

तस्माद् वः सर्वसिद्धिर्भवतु भगवतो भूरिमायाप्रपञ्चः
पञ्चत्व प्राप्य यस्मादगमदमरतां राक्षसः सोऽपि सम्यक्।
किन्तु श्रीकान्तकान्ताहठहरणमहापातकात् तेन काम-
व्यामोहान्धेन बन्धुक्षयनिरयरुजः सेहिरे जीवतैव ॥ ९२ ॥

[ हृदयरञ्जनी ]

**तस्माद् व** इति। 'तस्माद्' रामाद् 'व' युष्माक 'सर्वसिद्धिर्भवतु' सर्वेषा कामाना–मनोरथाना सिद्धि–निष्पत्तिर्भवतु। 'यस्माद्' रामात् सकाशाद् राक्षसोऽपि सम्यगमरतामगमत्। सम्यग्विशेषण मोक्षार्थप्रतिपादकम्। पञ्चत्व 'प्राप्य' अधिगम्य सद् वृत्तमोक्ष प्राप्नोति। कि तत्र नेत्याह–'भूरिमायाप्रपञ्चोऽपि' भूरि–अधिक माया–कपट-वृत्तिस्तस्या प्रपञ्च–विस्तारो यस्य स। एवविधोऽपि राक्षस यस्मान्मरणमधिगम्य मोक्ष लेभे, सद्वृत्तस्य का कथा? इत्यर्थ। विषमालङ्कार। ननु हनाना पातकाना भक्तिमन्तरा कथ तस्य मुक्तिर्जाता? "नाशुभ क्षीयते कर्म कल्पकोटीशतैरपि" इति वचनात्, तत्राह–किन्तु 'कामव्यामोहान्धेन' कामेन–अभिलाषेण मन्मथेन वा तस्य व्यामोहस्तेनान्धेन रावणेन जीवतैव सता 'बन्धुक्षयनिरयरुज' बन्धु–ज्ञातिवर्ग तस्य क्षय–नाशो मरण स एव निरय–नरक तत्र रुज–पीडा ता 'सेहिरे' भुक्ता। कस्मान्नरकप्राप्ति? इत्याह–'श्रीकान्तकान्ता०' श्रीकान्त–राम तस्य कान्ता–वल्लभा सीता तस्या हठेन हरण–चौर्य तज्जनितात् पातकाद् हेतोरिहलोके तत्पातकपरिपाकजनित निरय बुभुजे रावण इति। तथा चोक्तम्–"अत्युत्कटै पुण्यपापैरिहैव फलमश्नुते"। इति वचनात्। वास्तवालङ्कार ॥९२॥

पौलस्त्ये कालमेघद्युतिमुषितमहीकन्यकास्येन्दुकान्तौ
शान्ते रामः श्रियं वो वितरतु विरतस्फारबाष्पाम्बुपूरः।
यः साम्राज्यप्रतिष्ठां प्रथममगमयद् वानरेन्द्रं वयस्यं
तं वैरिभ्रातरं च स्वयमथ मथितस्थाणुधन्वा जगन्वान् ॥ ९३ ॥

[ हृदयरञ्जनी ]

**पौलस्त्य** इति। स रामः वः 'श्रियं वितरतु' लक्ष्मीं वितरतु। किम्भूतः? विरतः—शान्तः स्फारश्चासौ बाष्पाम्बुपूरश्च, विरतः—गतः बाष्पाम्बुपूरो यस्य सः। क सति? 'पौलस्त्ये शान्ते सति' पुलस्त्यस्यापत्यं पौलस्त्यः तस्मिन् रावणे मृते सति मारिते सति किम्भूते? 'काल०' कृष्णघनकान्तौ। पुनः किं०? 'मुषित०' महीकन्यका—सीता तस्याः आस्येन्दुः तस्य कान्तिः, मुषिता—हृता महीकन्यकास्येन्दुकान्तिर्येन स तस्मिन्, मेघे शान्ते विरतस्फाराम्बुपूरो भवति समयः। किम्भूते मेघे? कालत्विषि तथा मुषितेन्दुकान्तौ, अपहृतचन्द्रशोभो [ भवति ] समयो मेघत्विषि। मथितस्थाणुधन्वा रामः स्वनगरं प्रति 'जगन्वान्' गच्छन् 'प्रथमं' आदौ 'वानरेन्द्रं' सुग्रीवं 'वयस्यं' मित्रं सुग्रीवं 'साम्राज्यश्रियं' राज्यलक्ष्मीं 'अगमयद्' अयोजयद् राज्यं ददौ। 'च' अन्यत् तं च 'वैरिभ्रातरं' रावणभ्रातरं विभीषणं लङ्कासाम्राज्यलक्ष्मीमगमयत् साम्राज्ये प्रतिष्ठाम्। किम्भूतो रामः? 'अथ' अनन्तरं स्वयं जगन्वान् स्वनगरं प्रति गमिष्यन्। रूपकोपमा ॥ ९३ ॥

[ बालबोधिनी ]

**पौलस्त्ये** इति। स रामो वः श्रियं वितरतु। कीदृशः? 'पौलस्त्ये' रावणे शान्ते सति 'विरतस्फारबाष्पाम्बुपूरः' विरतः—गतः स्फारः—वृद्धो बाष्पाम्बूनां पूरो यस्य स तथा। कीदृशे पौलस्त्ये? 'कालमेघद्युतिमुषितमहीकन्यकास्येन्दुकान्तौ' कालश्चासौ मेघश्च तस्य द्युतिरिव द्युतिर्यस्य स तथा तेन मुषिता—चोरिता महीकन्यका—सीता तस्याः आस्यं तदेव इन्दुः—चन्द्रः, द्युत्या मुषिता महीकन्यकास्येन्दुकान्तिर्येन स तथा तस्मिन् स कः 'यः।' रामः प्रथमं 'वानरेन्द्रं' सुग्रीवं 'वयस्यं' सखिं (सखायं) साम्राज्यप्रतिष्ठां अगमयत्। 'अथ' अनन्तरं 'वैरिभ्रातरं' विभीषणं साम्राज्यप्रतिष्ठामगमयत्। गत्यर्थत्वाद् "गतिबुद्धि०" [ पाणिनि० १-४-५२] इत्यादिना द्विकर्मकत्वम्। 'च' अनन्तर, यो रामः स्वयं साम्राज्यप्रतिष्ठां 'जगन्वान्' प्राप्तवान्। कीदृशः? 'मथितस्थाणुधन्वा' विदलित शम्भोर्धनुर्येन स तथा ॥ ९३ ॥

---

१ °द्युतिमुषि° भा १-२-३-४। एतत्पाठानुसारेण बालबोधिनी ॥ २ विगतस्फार° भा ३-४। एतत्पाठानुसारेण भा० प्रत्यन्तरे बालबोधिनी, ३ विगत°, ४ °पूरः' विगतः स्फा°.

सोऽस्तु प्रीत्यै प्रभुर्वः शुचिरपि दहने यत्पुरन्ध्री प्रविष्टा
शुद्ध्यै न श्रद्दधे तन्ननु जनककुले काऽप्यधर्मस्य शङ्का।
सा पत्युः किन्तु मृत्युं वितथमपि तदा तथ्यभावेन मत्वा
धिक् पापा जीविताऽस्मीत्यनुशयविवशा नूनमेतच्चकार ॥ ९४ ॥

[ हृदयरञ्जनी ]

**सोऽस्त्वि**ति। स प्रभुर्वः 'प्रीत्यै अस्तु' सुखाय भवतु। स कः ? 'यत्पुरन्ध्री' यस्य पुरन्ध्री स्त्री सीता 'शुचिरपि' पवित्राऽपि 'शुद्ध्यै' आत्मनो देहशुद्ध्यर्थं यद् दहने प्रविष्टा तद् लोकः तथा 'न श्रद्दधे' न मेने 'ननु' निश्चितं हि यस्मात् कारणाद् 'जनककुले का अधर्मस्य शङ्का?' सीताया व्यभिचारशङ्का नास्तीति तस्या दहनप्रवेशमन्यथा मन्यते स्म। कथम्? किन्तु 'सा' सीता 'इत्यनुशयविवशा' इतिपश्चात्तापेन परवशा सती 'नूनं' निश्चितं 'एतद्' अग्निप्रवेशलक्षणं कर्म 'चकार' कृतवती। इतीति किम्? 'पापा' पापरूपाऽहं 'जीविताऽस्मि' अद्यापि जीवामि मां धिक्। किं कृत्वा? 'पत्युः' रामस्य 'वितथमपि' असत्यमपि अपरमार्थमपि 'मृत्युं' मरणं 'तदा' तस्मिन् समये 'तथ्यभावेन' परमार्थेन 'मत्वा' बुद्ध्वा। अयमनुशय इति हेतोः शरीरं त्यक्ष्यामीति अग्नौ प्राविशत्, न तु शुद्ध्यर्थं इति लोकैस्तदा ज्ञातमिति ॥ ९४ ॥

[ बालबोधिनी ]

सोऽस्तु प्रीत्यै इति। स विभुः वः प्रीत्यै अस्तु। स कः ? 'यत्पुरन्ध्री' सीता 'शुचिरपि' शुद्धाऽपि दहने प्रविष्टा सती तत् न श्रद्दधे। तत् किम्? 'ननु' इति वितर्के। जनककुलेऽधर्मस्य शङ्काऽपि का? किन्तु अपरमपि श्रद्दध-साऽहं तदा 'वितथं' अनृतमपि 'पत्युः' रामस्य मृत्युं 'तथ्यभावेन' सत्यभावेन 'मत्वा' ज्ञात्वा धिग् जीविताऽस्मि 'इत्यनुशयविवशा' इतिपश्चात्तापपरवशा सती 'नूनं' निश्चितं एतद् दहनप्रवेशनं 'चकार' कृतवती ॥ ९४ ॥

*

मन्थानः सूर्यसूनुः घनकनकशिलाभङ्गपिङ्गः प्लवङ्ग
मः साक्षात् सूर्यमेव व्युपरमसमये दुर्दशाया निशायाः।
निःशोकः कोकलीलामलभत दयितासङ्गमाज्जङ्गमानां
प्राणानां स्थावरत्वं निरचयतु स वः सेवितांघ्रिः सुरौघैः ॥ ९५ ॥

[ हृदयरञ्जनी ]

मन्वान इति। स वः 'जङ्गमानां प्राणानां' चराणां प्राणानां–असूनां 'स्थावरत्वं' स्थिरत्वं 'विरचयतु' निर्मातु। किंविधः? 'सुरौघैः' देवसमूहैः 'सेविताङ्घ्रिः' आराधितपादः। स इति कः? 'निःशोकः' गतशोकः सन् 'कोकलीलां' चक्रवाकलीला 'अलभत' लेभे। कस्माद्? 'दयितासङ्गमात्' सीताप्राप्तेः, यथा कोकश्चक्रवाकीं प्राप्य निःशोको भवति तथेति। किंकुर्वाणः 'यः' रामः 'प्लवङ्गं' सुग्रीवं साक्षात् सूर्यं 'मन्वानः' जानानः। कदा? दुर्दशाया निशायाः 'व्युपरमसमये' अवसाने प्रभाते। किंलक्षणं प्लवङ्गं सूर्यं च? कनकशिलायाः–सुवर्णपाषाणस्य भङ्गः–छेदः तद्वत् पिङ्गः, सूर्योऽपि पिङ्गलः। 'प्लवङ्गं' सूर्यस्य सूनुं पुनः। उपमालङ्कारः चक्रवाक-रामयोः सीता-चक्रवाक्योः दुर्दशा-निशोः सुग्रीव-सूर्ययोः॥ ९५॥

[ बालबोधिनी ]

मन्वानः सूर्येति। 'सः' रामः वो जङ्गमानां प्राणानां स्थावरत्वं 'विरचयतु' स्थैर्यं करोतु। कीदृशः? 'सुरौघैः सेविताङ्घ्रिः' देवसमूहैः सेवितौ अङ्घ्री यस्य स तथा। स कः? 'यः' रामः निःशोकः सन् दुर्दशाया निशायाः 'व्युपरमसमये' अन्तावसरे दयितासङ्गमात् 'कोकलीलां' चक्रवाकलीलां 'अलभत' प्राप्तवान्। अपरं कीदृशः? 'सूर्यसूनुं प्लवङ्गं' सुग्रीवं साक्षात् सूर्यमेव मन्वानः। कीदृशम्? 'घनकनकशिलाभङ्गपिङ्गं' घन–बहु यत् कनकं तस्य शिला तस्याः भङ्गवत् पिङ्गं–कर्बुरकम्॥ ९५॥

*

प्रम्लानां पुष्पघातैरपि कुसुमशरप्रेषितैः प्लोषशून्यां,
संसृष्टेनाग्निनाऽपि प्रभुरवनिसुतां वीक्ष्य हृष्टोऽवताद् वः।
राज्ञस्तस्याऽऽज्ञया यः कृतवनगमनः प्राप यां यामवस्थां
तां तामद्यापि शृण्वन्ननुभवति जनश्चेतसा तादृशैव॥ ९६॥

[ हृदयरञ्जनी ]

प्रम्लानामिति। स प्रभुः वोऽवतात्। किंलक्षणः? 'हृष्टः' सन्तुष्टः। किं कृत्वा? 'अवनिसुतां' [सीतां] निरीक्ष्य। किंलक्षणां सीताम्? 'संसृष्टेनापि' स्पर्शमुपगतेनापि 'वह्निना' वैश्वानरेण 'प्लोषशून्यां' दाहरहितामदग्धां। पुनः किंभूताम्? 'कुसुमशरप्रेषितैः' कामप्रयुक्तैः पुष्पघातैरपि 'प्रम्लानां' दुःखिता पीडिताम्, अत्रात्यन्त-

१ शोषशून्यां भा ३-४। एतदनुसारेण बालबोधिनी॥ २ संसृष्टे' भा १-३-४। एतदनुसारेण बालबोधिनी॥

सुकुमारत्व व्यङ्ग्यम्। कथम्? आदौ पुष्पाणि सुकुमाराणि, तत्र काम प्रयोक्ता सोऽपि अनङ्ग, सकामो राम। तस्य 'राज्ञ' पितु दशरथस्य 'आज्ञया' निदेशेन कृतवनगमन सन् यां यामवस्था प्राप, जन ता तामवस्था श्रृण्वन् पुराणादिषु 'अद्यापि' इदानीमिव चेतसा अनुभवति 'तादृशेन' तल्लक्षणेनैवेति ॥ ९६ ॥

[ बालबोधिनी ]

प्रम्लानामिति। स 'प्रभु' राम व अवतात्। कीदृश? ['अवनिसुतां'] जनक सुता वाक्य दृष्ट। कीदृशां जनकसुताम्? 'कुसुमशरप्रेषिते' कामप्रेषिते पुष्पवातैरपि प्रम्लानाम्। अपर कीदृशाम्? सस्पृष्टेनाप्यग्निना 'शोकशून्यां' शोकरहिताम्। स क? यो राम तस्य 'राज्ञ' दशरथस्य आज्ञया कृत्वा कृतवनगमन या या अवस्था प्राप अद्यापि 'जन' लोक तां ता अवस्था श्रृण्वन् सन् तादृशैव चेतसा अनुभवति ॥ ९६ ॥

*

**योऽद्धा योद्धाऽवधीत् तान् सपदि पलभुजः सम्पराये परा ये**
**येनाऽयेनाऽऽश्रितानां स्तुतिरवनमितेशानचापेन चाऽऽपे।**
**लङ्कालङ्कारहर्ता ककुभि ककुभि यः कान्तया सीतयाऽऽसी-**
**दूनो दूनोऽपि हृष्टः स विभुरवतु वः स्वःसभार्यः सभार्यः ॥९७॥**

[ हृदयरञ्जनी ]

योऽद्धा योद्धेति। स विभु 'व' युष्मान् 'अवतु' रक्षतु। किंलक्षण स? 'स्वःसभार्य' स्व—स्वर्ग तत्र या सभा—स्वर्गसभा तस्या अर्य—स्वामी, "अर्य स्वामि वैश्ययो" [पाणिनि० ३-१-१०३] इति निपातनात् साधु। पुन, 'सभार्य', भार्यया—कलत्रेण सह वर्तत इति, सभार्य—पत्न्या सहित। य कान्तया—सीतया ऊन—रहित सन् ककुभि ककुभि 'दून' पीडित, 'आसीद्' दु खितोऽभवत्। अत एव किंलक्षण, 'लङ्कालङ्कारहर्ता' लङ्काया अलङ्कार—रावणस्तस्य हर्ता—मारयिता। पुन किं० योद्धा यो राम 'सम्पराये' सङ्ग्रामे ये 'परा' शत्रव 'पलभुज' राक्षसा वर्तन्ते तानवधीद् 'अद्धा' निश्चितम्। 'येन' रामेण आश्रितानां 'अयेन' शुभावहेन विधिना 'स्तुति' स्तोत्र च 'आप' प्राप्ता, कर्मणि आश्रिता एन तुष्टुवुरित्यर्थ। किंलक्षणेन येन? 'अवनमितेशानचापेन' अवनमित ईशानचापो येन तेन। लाटानुप्रास ॥ ९७ ॥

[ बालबोधिनी ]

योऽद्धा योद्धेति। स विभुर्वोऽवतु। कीदृश? 'स्वःसभार्य' स्व—स्वर्गस्तस्य सभा तस्या अर्य—स्वामी, "अर्य स्वामिवैश्ययो" [पाणिनि० ३ १ १०३] इति निपातनात्।

दृष्ट्वा अतृप्यन्। दर्शेण-अमावास्यया कशिता-प्रसिता या शशिकला-चन्द्रकला तद्वत् कोमलमङ्गं-गात्रं यस्याः सा ताम्। अपरं कीदृशः? 'समरगतप्राणितानां' सङ्ग्राममृतानां 'कपीनां' वानराणां 'विश्वाधीशप्रसादात्' श्रीरामप्रसादाद् 'भूयः' पुनः संजीवितानामपि 'सुखनयनजलैः' हर्षाश्रुभिः कृत्वा 'शान्तशोकाश्रयाशः' आश्रयं अश्नातीत्याश्रयाश:-अग्निः, शान्तः शोकरूप आश्रयाशो यस्य स तथा ॥ ९८ ॥

**क्षित्या सीतां सुवित्वा क्षितिधरनिकरं तारयन्तीभिरद्भि-**
**र्वातेनोत्पाद्य पुत्रं प्लवगमदहता वह्निना तस्य देहम्।**
**आकाशेनावकाशं गगनगतिरतेः पुष्पकस्थस्य यस्य**
**क्षिप्रं दत्त्वोपचक्रे, विरचयतु स वः चक्रपाणिः प्रियाणि ॥ ९९ ॥**

[ हृदयरञ्जनी ]

**क्षित्या सीतामिति।** सः 'चक्रपाणिः' चक्रं पाणौ यस्य स विष्णुः वः 'प्रियाणि' इष्टानि विरचयतु। स कः? यस्य पञ्चमहाभूतैरेतैरेवं 'उपचक्रे' उपकारः चक्रे-कृतः। क्षित्या सीता 'सुवित्वा' उत्पाद्य। तथा 'अद्भिः' पानीयैः [कीदृशीभिः?] 'क्षितिधरनिकरं' पर्वतसमूहं ['तारयन्तीभिः'] प्लावयन्तीभिः। तथा 'वातेन' वायुना किं कृत्वा? 'प्लवगं' हनुमन्तं पुत्रमुत्पाद्य। तथा 'वह्निना' पावकेन किं कृतवता? तस्य हनूमतः 'देहं' शरीरं 'अदहता' अप्लुषता। तथा 'आकाशेन' गगनेन किं कृत्वा? 'अवकाशं' मार्गं दत्त्वा। किंलक्षणस्य यस्य? 'नगरगतिरतेः'[1] नगरस्य गतिः-गमनं तत्र रतिर्यस्य तस्य। पुनः कथम्भूतस्य यस्य? 'पुष्पकस्थस्य' कुवेरयाने तिष्ठतः 'एवं' अमुना प्रकारेण तैरुपचक्रे। दीपकं अन्यक्रियादीकम्(?) ॥ ९९ ॥

[बालबोधिनी]

**क्षित्या सीतामिति।** स 'चक्रपाणिः' रामः वः 'प्रियाणि' इष्टानि विरचयतु। स कः? 'यस्य' रामस्य पृथिव्यप्तेजोवाय्वाकाशैः 'उपचक्रे' उपकारः कृत। तत्र विभागेन दर्शयति-क्षित्या सीता 'सुवित्वा' प्रसूय उपचक्रे, 'क्षितिधरनिकरं' पर्वतसमूहं तारयन्तीभिरद्भिः उपचक्रे, वातेन 'प्लवगं पुत्रं' हनूमन्तमुत्पाद्य उपचक्रे, 'तस्य' हनूमतो देहमदहता वह्निना उपचक्रे, पुष्पकस्थस्य गगनगतिरतेः रामस्य 'क्षिप्रं' वेगेन आकाशेन अवकाशं दत्वा उपचक्रे। गगने गतिः तस्या रतिः-प्रीतिर्यस्यासौ गगनगतिरतिस्तस्य गगनगतिरतेः ॥ ९९ ॥

---

[1] 'नगरगति॰' इति हृदयरञ्जनीपाठः।

यचक्रे तेन तिग्मद्युतिकुलगुरुणा भूपभावाभिषेके
कल्याणं कोणपारिस्तदुपनयतु वः स प्रभुः सप्रमोदः ॥ १००

[ हृदयरञ्जनी ]

निस्तीर्णेति । 'तिग्मद्युतिकुलगुरुणा' वसिष्ठेन, रामस्य , 'भूपभावाभिषेके' त्वाभिषेके राज्याभिषेकसमये यत् कल्याणं चक्रे सः 'कोणपारिः' दैत्यशत्रुः [ 'प्रभुः' रामः 'तत्' कल्याणं व उपनयतु । कथम्भूतः प्रभुः ? 'सप्रमोदः' सहर्षः । कथम्भूतस्य 'निस्तीर्णक्लेशराशेः' निस्तीर्णः—उत्तीर्णः क्लेशाना—कष्टानां राशि—समूहो येन तस्य । तथा किम्भूतस्य ? 'अम्बाकदम्बाद्' मातृसमूहात् 'चिरविरहकृता' वियोगजनितां 'आर्त्तिं' पीडां '[ उच् ]छिन्दानस्य' भिन्दानस्य 'सद्यः' तत्क्षणम् । पुनः किम्भूतस्य ? प्रणतं 'अवरजं' भ्रातरं भरतं 'तं च' शत्रुघ्नं 'श्लिष्यतः' परिष्वजतः ॥ १०० ॥

[ बालबोधिनी ]

निस्तीर्णक्लेशेति । 'सप्रमोदः' सहर्षः स 'प्रभुः' रामः 'वः' युष्माकं तत् कल्याणं 'उपनयतु' करोतु । स कः ? यस्य 'कोणपारेः' रामस्य यत् कल्याण तेन 'तिग्मद्युतिकुल-गुरुणा' सूर्यकुलगुरुणा वसिष्ठेन 'भूपभावाभिषेके चक्रे' राज्याभिषेके चक्रे । कीदृशस्य यस्य ? 'निस्तीर्णक्लेशराशेः' निस्तीर्णः—उत्तीर्णः क्लेशराशिः—क्लेशसमूहो येन स तस्य । अपरं 'अम्बाकदम्बाद्' मातृसमूहात् चिरविरहकृतामार्ति 'उच्छिन्दानस्य' निराकुर्वतः । अपर कीदृशस्य ? तं च तं च 'अवरजं' कनिष्ठभ्रातरं भरतं शत्रुघ्नं 'श्लिष्यतः' आलिङ्गत । कीदृशमवरजम् ? 'प्रणत' नमस्कुर्वन्तम् ॥ १०० ॥

[ हृदयरञ्जनी ] कविः स्वनाम ग्रन्थनाम च श्लोकेन सङ्गृणाति—

---

१ 'रामर्सि° भा १-४ । एतदनुसारेण बालबोधिनी ॥ २ 'स्य यस्य प्र° भा १-४ । एतदनुसारेण बालबोधिनी ॥

**विश्वम्भरामण्डलमण्डनस्य, श्रीरामभद्रस्य यशःप्रशस्तिम् ।**
**चकार सोमेश्वरदेवनामा, यामार्द्धनिष्पन्नमहाप्रबन्धः ॥ १०१ ॥**

## ॥ इति श्रीरामशतं सम्पूर्णम् ॥

[ हृदयरञ्जनी ]

ग्रन्थचोरभयात् कविः काव्यनायकस्य काव्यस्य आत्मनश्च नाम ग्रन्थान्ते श्लोकेन बध्नाति-**विश्वम्भरेति ।** **सोमेश्वरदेव**नामा कविः **श्रीरामभद्रस्य** 'यशःप्रशस्तिं 'चक्रे' कृतवान् । किंलक्षणस्य श्रीरामभद्रस्य ? 'विश्वम्भरामण्डलमण्डनस्य' पृथ्वीमण्डलाभरणस्य । किंलक्षणः सोमेश्वरदेवः ? 'यामार्द्धनिष्पन्नमहाप्रबन्धः' यामार्द्धेन-प्रहरार्द्धेन निष्पन्नः-रचितः महान् प्रबन्धो येन सः । यशःप्रशस्त्युदाहरण-प्रबन्धोऽयम् ॥ १०१ ॥

**इति श्रीएकनाथभट्टविरचिता रामशताभिधानस्य काव्यस्य सोमेश्वरदेवनिर्मितस्य शुभहरिवल्लभाख्या टीका समाप्ता ॥**

अनेन स्तोत्राधीशः श्रीरामः प्रीतोऽस्तु ॥ ग्रन्थसंख्या शत १५०० पूर्णा ॥

[ बालबोधिनी ]

**विश्वम्भरेति ।** **सोमेश्वरदेव**नामा पुमान् **श्रीरामभद्रस्य** यशःप्रशस्तिं चकार । कीदृशः ? 'यामार्द्धनिष्पन्नमहाप्रबन्धः' यामस्य-प्रहरस्यार्द्धं तेन निष्पन्नो महाप्रबन्धो यस्मात् स तथा । कीदृशस्य रामभद्रस्य ? 'विश्वम्भरामण्डलमण्डनस्य' भूमण्डलाभरणस्य ॥ १०१ ॥

॥ इति श्रीरामशतककाव्यविवरणं सम्पूर्णम् ॥

---

१ एतदुपसंहारस्थाने प्राग् डे १ आदर्शे

रम्यं रामायणाब्धेर्बहुसरससरस्यत्यगाधात् गृहीत्वा
त त्वं वाच्यार्थरत्नं व्यरचि शुचिरुचिः स्वामिसोमेश्वरेण ।
कण्ठालङ्काररूपं भवति सुकृतिनो यस्य नित्यं सुदत्तं
श्रीरामात् श्रीशतं तन्मुखमनुपरतं श्रीसुवर्णं विभाति ॥

इतीदं मूलरूपेण अधिकं काव्यमुपलभ्यते । नास्तीदं वृत्तिकृद्रया व्याख्यातमिति प्रक्षिप्तमिदं ज्ञेयम् ॥ २ रामशतटीका समाप्ता पु० ॥

# परिशिष्टम् ।

## केशवविरचितम् ।

## ॥ रामगतकाव्यम् ॥

॥ श्रीगणेशाय नमः ॥

वामाङ्गे(ङ्के) जनकात्मजां कटितटे वासस्तडित्सन्निभं
चञ्चत्काञ्चनकुण्डले श्रवणयोर्वक्ष:स्थले कौस्तुभम् ।
कस्तूरीतिलकं दधानमलिके विज्ञानमुद्रान्वितं
रामं सान्द्रपयोदसुन्दरतनुं ध्यायाम्ययोध्यापतिम् ॥ १ ॥

श्रीराम ईशे भुवनैकवीरे को रामनामानुकरो बलीह ? ।
वदन्निति द्वारवतीं सकोपश्चचाल साकेतवनान्मरुज्जः ॥ २ ॥

नन्दत्यपि श्रीयदुवंशवीरे मरुत्सुतः कोशयुगं बहिःस्थः ।
पुरीं परां द्वारवतीं सकोपो व्यपीडयत् पुच्छपरिभ्रमेण ॥ ३ ॥

न के नरास्तत्र न काश्च कान्ता न के गवाद्याः पशवस्तदानीम् ।
पुच्छप्रतिक्षेपभयप्रकर्षं प्रपेदिरे तस्य महाबलस्य ? ॥ ४ ॥

जनैरशेषैः किल पाणिसन्धृतं पुच्छं विधायाऽनिलसूनुरुच्चकैः ।
आवर्तयामास विपत्पयोधौ निमज्जनोन्मज्जनतो व्यनर्तयत् ॥ ५ ॥

उपप्लुतस्तन्नगरीजनो भृशं तदोपतस्थे वसुदेवनन्दनम् ।
पश्यत्यपि त्वय्यतुलात्मवैभवे हरे ! विचित्रं किमिदं ? वदन्निति ॥ ६ ॥

ततो गरुत्मन्तमुवाच माधवः समभ्रवीरोन्नतगर्वपर्वतम् ।
पुरःस्थितं स्वीकृतपाणिसम्पुटं प्रवीरवर्गस्तुतबाहुविक्रमम् ॥ ७ ॥

सपदि बत ! पयोधिमुल्लङ्घ्य दशवदनस्य च यः पुरीं ददाह ।
द्विजवर ! भविता स वायुसूनुर्दशरथसूनुसखस्तमानयस्व(त्वम्) ॥ ८ ॥

इति हरिवचसा तमेत्य तूर्णं रघुपतिरूपमनारतं स्मरन्तम् ।
विरचितपदपङ्कजप्रणामः प्रणयवचोभिरुपाचरत् स पक्षिः ॥ ९ ॥

विधियमवरुणेन्द्ररुद्रमुख्यः सुभग ! तवेच्छति वीक्षणं मुकुन्दः ।
तदनुपदमुपेहि तं महान्तं पुरुषविशेषमशेषवन्दिताङ्घ्रिम् ॥ १० ॥

सर्वस्वमुर्व्या[ : ] किमनर्घ्यरत्नं भाग्यं दृशा( दिश. ? ) प्रेम हरेः किमङ्गम् ? ।
कल्पस्थलक्ष्मीसदनं नितान्तमालोक्य द्वारवतीं पुरीं च ॥ ११ ॥

पुर्यः शतं सन्ति परास्तथापि न द्वारकायास्तुलनेत( ऽप )राऽत्र ।
क नाम हेमाभरणप्रतिष्ठा ? क चारुकूटाभरणोपचारः ? ॥ १२ ॥

शृङ्गारमूर्तिर्मृगलोचनाभिः सानन्दमानन्दति यत्र कृष्णः ।
स( सा )रम्य धन्यस्य निरीक्षितैव स्वर्गोऽपवर्गाधिकशर्मदानाम्( न ) ॥ १३ ॥

असौ हरेर्द्वारवती यदस्मिन् पुरी वरीवर्त्यधिका दिवोऽपि ।
दधार लोकस्तदलौकिकश्रीर्लोकत्रयीमध्यमणित्वमेषा( षः ) ॥ १४ ॥

कल्पद्रुमः कल्पलता तथैव चिन्तामणिः कामपयस्विनी च ।
वसन्ति तेनाऽधिकता दिवश्चेत् तत् कामदोऽस्यामरविन्दनाभः ॥ १५ ॥

स्मरसि यमनिशं त्वमेव साक्षादुपनिषदर्थमिहावगच्छ पुर्याम् ।
निरवधि सुखधाम धाम भासा त्रिभुवनमङ्गलमिन्दिराभिरामम् ॥ १६ ॥

मुखमिलन्मुरलीरवमाधुरीसुस्वनिमान्त्रिक्ष( त )पौरवधूजनम् ।
भज समानकदुन्दुभिनन्दनं घननिभं जनताघनतापहम् ॥ १७ ॥

सपदि चल सखे ! सुखालयोधं हरिमवलोकय मा भयं वहस्व ।
रघुपतिचरणाम्बुजैकभावस्त्वमसि न तन्मनुते स तेऽपराधम् ॥ १८ ॥

भगवता भवता श्रुतनिर्मलं निगदितं तदिदं विदितं मया ।
शृणु[ म ]मापि वचस्त( स्त्व )मथेति तं कपिपतिः पततां पतिमब्रवीत् ॥ १९ ॥

रघुकुलतिलकं विनाऽयमात्मा क्वचन मनागपि याति न प्रसादम् ।
यदि मम वचनेऽन्यथा मतिश्चेत् त्रिभुवनविद्धरिरत्र साक्षिभूतः ॥ २० ॥

रघुपति-यदुवीरयोर्न भेदो मतिरिति यद्यपि विद्यतेऽनवद्या ।
तदपि रघुकुलावतारमूर्तौ मम मनसोऽपि दृशोऽपि कोऽपि भावः ॥ २१ ॥

रघुपतिवपुराद्रियेत कृष्णो निजनगरीं विदधीत चेदयोध्याम् ।
कथमपि सरयूं च गोमतिं( तीं ) तामनुपदमेमि तदा मुदा महत्या ॥ २२ ॥

सर्वोत्तमस्य यदि दाशरथेः पुरी सा सर्वाधिका न पदका सदृशी तयास्ते ॥ २३ ॥

लब्धं यतः सकलतारकराममनाम कर्णे जपन् किल वपुस्त्यजतां जनानाम् ।
वाराणसीं पु[ प ]रपुरन्दर इन्दुमौलिः कैवल्यमाकथ( ल )यते मणिकर्णिकायाम् ॥२४॥

आनन्दधामनि विभौ मदनाभिरामे
रामेऽभिरामगुणकर्मकृपाभिरामे ।
सौराज्यमादधति यत्र न कोऽपि लोकः
शोकं मनागपि कदाऽपि कुतोऽपि लेभे ॥ २५ ॥

दिव्याङ्गनाधिकमनोहरसुन्दराभिः
सम्पत्तिभिश्च विविधाभिरभूतपूर्वा ।
पुर्या कयाऽपि खलु सा नगरी न योध्या
तेनोच्यतेऽखिलजनैर्भुवनेष्वयोध्या ॥ २६ ॥

मा नेतुमास्ते यदि तेऽभिलाषस्तदा पुनर्द्वारवतीं व्रजस्व ।
लीलातनुर्विश्वविदप्रमेयस्त्वया स वाच्यो वचसाऽमुना मे ॥ २७ ॥

गुञ्जापुञ्जादिभिः किं तव कलय कलाशालिमुक्तादिमाला
बाला नाऽऽलम्बयाऽतिप्रबलमदचलामन्यदीयामवद्याम् ।
सार्धं गोपालबालैः किमु परिचरणादिन्द्र वागिन्द्रचन्द्रा-
विन्द्रोपेन्द्रौ दिगिन्द्राद्यमरवरपरीवारमाराञ्जयस्व ॥ २८ ॥

वेणुं छिद्रयुतं त्यजस्व( ? )गुणवत् पाणौ धनुः स्वीकुरु
शृङ्गं चास्थिमयं विहाय सशरं तूणीरमालम्बय ।
किं वान्यत् पशुपालनात् तव प्रभो ! राज्यं त्वमेवाश्रय
श्रीरामानुचरानतेर्यदि हि तं( ते ) वाञ्छा समुज्जृम्भते ॥ २९ ॥

अनेन किं ते वितथाग्रहेण विलोकय श्रीपतिमादरेण ।
नेष्यामि नो चेदधुना बलेन त्वामित्यवोचद् विनतासुतस्तम् ॥ ३० ।

इति निशम्य वचः पद्मनाङ्गजः प्रबलकोपविलोहितलोचन. ।
कठिनघट्टनपाणिचपेटकैर्गरुडतुण्डमखण्डमताडयत् ॥ ३१ ।

तदनु यावदसौ कथमप्यहो ! हनुमता विदधे समरोद्यमम् ।
स कृतपुच्छपरिभ्रमदुर्दशं तमुदधौ खलु तावदपातयत् ॥ ३२ ॥

कथमपि नगरीमुपेत्य कम्पद्रुपुरवदत् स सुरद्विपं विवर्णः ।
शतमपि निपतन्तु वज्रधारास्तदपि न तत् कपिकोपदप्र( च )पातः ॥ ३३ ॥

मधुरतराणि वचांस्यवोचमादौ तदपि न तानि वतोररीचकार ।
तदनु खलु यदा दुरुक्तिरुक्ता हर हर मे प्रलयाधिकः स कालः ॥ ३४ ॥

रचयति भगवान् विधाय कृत्यं लघु लघुनाऽपि मिषेण येन केन ।
जगति खलु विनाशमाशु नीतः पवनसुतेन गुरुत्मतो विवर्गः (ऽपि गर्वः) ॥ ३५ ॥

दशरथसदनावतारमूर्त्तेरथ पुनरिच्छति मे विलोकनं सः ।
तदहमनुसरामि तत्स्वरूपं कलय कुरङ्गदृशोऽथ भूसुतायाः ॥ ३६ ॥

............................................................ ।
वरतनु ! यदहं भवामि रामो यदुपतिरित्थमुवाच सत्यभामाम् ॥ ३७ ॥

जनकनृपसुतानुकारहेतोः पुनरनया विहितो न कः प्रकारः ? ।
तदपि बत ! ययौ न तत्स्वरूपं जगति हि रम्यतमं न सद्वितीयम् ॥ ३८ ॥

तामङ्गकान्तिं सुकुमारतां ता दृगाकृतिं ता मदनश्रियं ताम् ।
तामास्यलक्ष्मीमनवाप्य भूयः प्रिया ह्रिया नम्रमुखी बभूव ॥ ३९ ॥

यामिनीशनिभवक्त्रशालिनी कामिनी कृतगुणाभिलाषिणी ।
रुक्मिणी यदुपतेरथाज्ञया जानकीतनुमुरीचकार सा ॥ ४० ॥

रघुपतिवपुषो हरेर्निदेशात् स तमभिगम्य पुनर्गिरं जगाद ।
व्रज सपदि सखे ! पुरीमयोध्यां यदि तव रामनिरीक्षणेऽनुरागः ॥ ४१ ॥

मुखभवपुलकोल्लसत्कपोलस्त्रिभुवनतारकरामनामचेताः ।
सह पथि गरुडेन सोधि( ऽपि )गच्छन्दशकुनभैरिति तर्कयाञ्चकार ॥ ४२ ॥

जनकनृपसुताविभूषिताङ्गः सजलपयोदतमालतालनील. ।
मम दृगतिथिरद्य राघवः स्यान् प्रचरति यत् पथि दक्षिणो मृगौघः ॥ ४३ ॥

रघुपतिमुखचन्द्रचन्द्रिकाया नयनचकोरयुगं धृतानुराग ( गम् ) ।
नियतमधिगतार्थमद्य यस्यात्यधि( यदि ) पतितो दृषि( शि )
चाप एवयाम.( चैष एव रामः ) ॥ ४४ ॥

रघुपतिपरिरम्भसम्भ्रमान्मे विहगपतेर्भविताऽद्य कोऽपि हर्षः ।
स्फुरति खलु नितान्तमेव बाहुर्मुहुरथ दक्षिणमाक्षि यच्चिरेण ॥ ४५ ॥

जितमदनविलासं विद्युदम्भोदवासं
कलितलळितवेशं जानकीजीवितेशम् ।
कमलनयनमाद्यं सर्ववेदान्तवेद्यं
प्रमदयुतमथाऽसौ मारुतिस्तं ददर्श ॥ ४६ ॥

रामः कृपादोलितदृग्विलासः सानन्दमालिङ्गय कृताञ्जलिं तम् ।
अभूतपूर्वाद्भुतभूरिभक्तिः(क्तिं) प्रेमानुरूपां गिरमित्युवाच ॥ ४७ ॥

पवनसुत ! जगत्त्रयेऽपि किञ्चिद्भवदुपकारसमं न तत्प्रदेयम् ।
किमपि यदि भवान्वदेदिदानीं तदपि मदीयमनोऽनुमोदमात्रम् ॥ ४८ ॥

त्वं मामकोऽसि भवतोऽहमिति प्रवक्तुं
नैवोत्सहेऽत्र यदयं खलु भेदवादः ।
योऽहं स एव हि भवानिति चेद्ब्रवीमि
त्वद्भक्तिशर्म कुत एतदभेदवादः ॥ ४९ ॥

वाचं निपीय जगतामधिपस्य तस्य
वाचं मनःश्रवणतोषकरामुवाच ।
पूर्वाऽनुभूतचरितश्रवणोपनीत-
बाष्पावलीभिरवलीढविलोचनोऽसौ ॥ ५० ॥

अमृतं त्वमसि स्वयं ततस्तव नामाऽपि गिरस्ततस्तव ।
वपुषः परिरम्भसंश्र(सम्भ्र)मात्सकलं लब्धमतः परं कियत् ॥ ५१ ॥

वससि हृदि ममानिशं ततोऽपि त्रिभुवनपालन ! किं वरेण्यमास्ते ।
अपि च यदुकुलावतारकाले रघुपतिरूपमुरीकृतं मदर्थे ॥ ५२ ॥

पीतो(तीर्णो)नाम्बुनिधिः क्षणेन सहसा लङ्का न चूर्णीकृता
नानीतानि शिरांसि राक्षसपतेर्नाऽऽनायि सीता मया ।
दास्यं त्वच्चरणाब्जयोर्विरचितं नाद्यापि किञ्चिन्मया
कस्मान्मामपराधिनं कृपयसे तन्नाथ ! न ज्ञायते ॥ ५३ ॥

केनाकारि शिला वधूर्जलनिधौ केनोपलास्तारिता ।
केनान्येन पुनः स्वकीयनगरी वैकुण्ठमासा(पा)दिता ।
प्राणान्तेऽपि च कस्य नाम शरणं संसारिणा प्राणिना
कारुण्यैकनिधान ! ते रघुपते किं किं न लोकोत्तरम् ॥ ५४ ॥

द्विर्दानं न कदापि याचकजने द्विः स्थापनं नाश्रिते
द्विः शत्रौ न शराभिसन्धिरपि च द्विर्भाषणं न क्वचित् ।
एतेऽन्यत्र वसन्ति कुत्र नियमाः सा राजनीतिः क्वचित्
कासीदेकवधूव्र(व्र)तं रघुपते तत्रापि लीला न ते ॥ ५५ ॥

तिर्यग्योनिषु नावतारकलनं भामा(भूमौ)न मायाकृतिः
कापट्यं न कदापि वाचि न रतिर्निन्द्येषु कर्मस्वपि ।
प्रेमा नान्यवधूषु यत्र सदसत्त्राणक्षयोपेक्षणं
श्रीमद्राम ! दयानिधेस्तव तुला नैवाऽवतारान्तरे ॥ ५६ ॥

कण्ठालम्बितकालकूटविकलो गङ्गां शिरस्यादधे
मौलौ चन्द्रकलां ततश्च गिरिजामर्धाङ्गभागे हरः ।
स्वास्था नाऽऽप तथाऽप्यहो तदनु ते श्रीरामनामामृतं
स्वीचक्रे किमतः परं रघुपति(ते)गेयं भवद्वैभवम् ॥ ५७ ॥

श्रीमद्राम विपद्विराम जगतामाधार धाराधर
श्यामाऽपारगुणाभिराम करूणाकूपार वीराग्रणी ।
नित्यं त्वच्चरणारविन्दयुगलध्यानाद्योध्यापते
कालो गच्छति यस्य तस्य न भयं कालादकालादपि ॥ ५८ ॥

उल्लसत्कनककेतकोदरद्योतमानतनुमात्तभूषणाम् ।
शारदेन्दुवदनामथावनीनन्दिनीमवददञ्जनि(ना)जनिः ॥ ५९ ॥

त्वं भूपरत्नमवनीकमनीयमम्ब ! स्पर्धीचकार तदिदं खलु रत्नभासा ।
किं वीक्षिताऽसि जनकेन यतस्त्वमादौ ससिद्धिमानिति जनैरुपगीयतेऽसौ ॥ ६० ॥

त्वत्तो न काचिदधिका गुणकर्मरूपै-
स्तुल्याऽथवाऽस्ति कल्याऽपि जयास्त्रि(येद् त्रि)लोक्याम् ।

जाने जगज्जननि जानकि तत् त्वदेक-
पलीक्र(व्र)त रघुपतिः कल्याञ्चकार ॥ ६१ ॥

मातस्त्वदीयचरणस्मरणावलोक-
स्पर्शावधूतहृदयाखिलतापशोक ।
आद्य पद परमवाप दशाननोऽपि
किं त्वा परे पतितपावि(व)नि भक्तिभाज ॥ ६२ ॥

लङ्कागृहापगतिरध्वनि वार्धिरोध्दु(धो)
युद्ध दशास्यरिपुणा कपय सहाया ।
रामोऽवधीत् तदपि राक्षसवृन्दमेक
स्तन्मूलमेव तव कुटिल(कुटिला तव) सौभगश्री ॥ ६३ ॥

रामोऽम्बुधिस्त्वमसि तल्लहरी स चन्द्र
स्त्व चन्द्रिकाऽसि जलद स पतुस्त(तु तत्व)डित् त्वम् ।
सर्वोत्तम स भगवानखिलार्थपूर्ण
स्त्व तस्य भाग्यमसि मूर्त्तिमदम्ब ! मन्ये ॥ ६४ ॥

निरवधि सुखधाम नाम जननि ! कदा भविता तवाऽवलोक ।
पुनरपि च तवाऽपि रूपमेतद्रघुकुलमण्डनमेकदाहमीक्षे ॥ ६५ ॥

सत्यं ब्रवीम्युचितम[स्त्वि]ति नैतदेव
व(य)त्साधुना सह स ते प्रल(ण)यानुबन्ध ।
दु ख यदस्य विरहो जनयत्यवश्यं
तस्मादहो किमधिका यमयातना(स्ता ॥ ६६ ॥

निरुपमसुखदो हि साधुसङ्ग पदमधराकुरुतेऽपवर्गलक्ष्म्या ।
यदि विलयमुपैति सोऽपि जन्तो शिव शिव हानिरितोऽपि काऽधिकाऽस्ते ॥ ६७ ॥

चिरमयमनलो यक्ष(दा)शु देह दहति जनस्य मृतस्य जीवतो वा ।
न तु विरहमहानल सतो यद् दहति सजीवमजस्रमङ्गमेष ॥ ६८ ॥

इति निगदति यावत्तावदेवाम्बुजाक्षः
पुनरपि निजरूप पूर्वमङ्गाच(ङ्गीच)कार ।

चरितमतिदुरूह( रूहं ) मण्डलाखण्डलाना-
मखिलभुवनभर्तुः किं पुनश्चक्रपाणेः ॥ ६९ ॥

घनाम्बुदश्यामलमम्बुजेक्षणं समुल्लसत्काञ्चनकुण्डलोज्ज्वलम् ।
पाता( पीता )म्बरं कुण्डिननन्दिनीव्र( वृ )तं विलोक्य तुष्टाव तमञ्जनीसुतः ॥ ७० ॥

ब्रह्माद्वयं त्वमसि निर्गुणमप्रमेयं
निर्मायमागमरहस्यमुपास्यमानम् ।
सत्त्वप्रकाशमविकल्पमनाद्यनन्त-
मानन्दपूर्णमविकारमपेतदोषम् ॥ ७१ ॥

अर्थव्ययं च वपुषः श्रममन्तरेण
यच्चिन्तनेन परमां गतिमेति जन्तुः ।
ध्यायेन्न तद्यदि मुकुन्द तवाङ्घ्रिपद्मं
किं जीवितेन नरवेषप( प )शोस्तदन्य( दास्य ) ॥ ७२ ॥

महेन्द्ररुद्रसलिलेन्द्रधरेन्द्रचन्द्र-
पक्षे( क्षी )न्द्रदक्षिणादिगिन्द्रमुनीन्द्रमृग्ये ।
कृष्ण त्वदङ्घ्रिकमले निरुपाधिभक्तेः
सायुज्यभक्तिरधिका न पुनः किमन्यत् ॥ ७३ ॥

तावत्सुतभ्रातृकलत्रमित्रैः श्रेयांसि भूयांसि जनो भुनक्ति ।
यावत्कृपाकन्दलितैः कटाक्षे से( क्षैस्त )वेक्षण न च्युतमच्युतस्य ॥ ७४ ॥

गोपिकानयनकैरवेन्दवे योगिमानससरोजभानवे ।
भक्तवृन्दभवसिन्धुसेतवे द्वारकाधिपतये नमो नमः ॥ ७५ ॥

सर्वमङ्गलनिदानवन्दिनीमङ्गकान्तिपरिभूय( त )काञ्चनाम् ।
[1]चपलं रुचिरं लशालिनीं रुक्मिणीमथ मरुत्सुतोऽब्रवीत् ॥ ७६ ॥

मुकुन्दवामाङ्कविराजमानां श्यामासखल्लीजितपूर्णचन्द्राम् ।
नना( मा )मि काश्मीरकृतानुलेपां धम्मिल्लनुच्छीकृतच( च )र्हिपुच्छाम् ॥ ७७ ॥

1 Before चपलं, 'गम' is prefixed in the Ms.

कुरङ्गशावस्पृहणीयनेत्रां समुल्लसच्चम्पकपुष्पनासाम् ।
घ( प्र )वालशालिव( लाभ )सुधाधरोष्ठीं मुक्तावलीरञ्जितकण्ठपीठाम् ॥ ७८ ॥

गिराण( रीप )पुष्पाधिकमार्दवाङ्गीमङ्गीकृतानङ्गकलाकलाया( पाम् ) ।
रत्नाङ्गुलीयावलिशालिहस्तामुच( त्तु )ङ्गपीनस्तनभारनम्राम् ॥ ७९ ॥

नि सीमलावण्यतरङ्गभङ्गी वलि( लि )त्रयी( यीं ) नाभिसु( मु )र-प्रसूता( तौ ) ।
शृङ्गारवल्लीमिव रोमराजीं काञ्चीं दधानामनुबद्धरत्नाम् ॥ ८० ॥

मृगेन्द्रगर्वापहमध्यभागां नितम्बगुर्वी( र्वीं ) क्र( ह्र )तकुम्भिकुम्भाम् ।
उ( ऊ )रुश्रिया निर्जितहेमरम्भास्तम्भां जगद्वन्दितपादपद्माम् ॥ ८१ ॥

त्वं भक्तकल्पक( ल )तिका [ क ]रुणैकमूर्त्ति-
स्तत् त्वामचिन्त्यचरितामहमम्ब याचे ।
त्वं मैथिली भव पुनर्जगतामराधा( धीशा )
नित्य प्रबोध( भो ! द )य( ? ) पुनर्भव जानकीशः ॥ ८२ ॥

एव निपीय वचनं मरुदङ्ग[ ज ]स्य
सर्वोत्तमो रघुपतिः स बभूव भूयः ।
सा कुण्डिनेन्द्रतनयाऽपि तदैव देवी
श्रीमद्विदेहतनया कृपया बभूव ॥ ८३ ॥

तद्रूपमी( मे )क्ष्य तडिदम्बुदसुन्दरश्री( श्रि )
श्रीमास्तयोर्युगपदा( द )ङ्घ्रियुगं नमामि ( नाम ) ।
उत्फुल्लनन्दनबलो( वनो )दितपुष्पब( वृ )न्दै
सानन्दमर्चितमरे( थे )न्द्रभवादिदेवैः ॥ ८४ ॥

अथाम्बुदादजनि काञ्चनभूरिवर्ष
पृथ्वी किमद्य विपदो( शदी )कृतदिव्यरत्ना ।
एकत्र किं नु मिलितस्त्रिजगत्सुखौघ-
स्तत्राऽवदद्वचनमित्थमथाञ्जनेयः ॥ ८५ ॥

आनन्दपीनपुलकस्फुरदाननश्री-
रव्याजसान्द्रकरुणागीम( णा द्दग )पाङ्गभङ्गी ।

सीतावदातचरिता परतापहन्त्री
प्रोवाच वाचमथ वायुतनूजमित्थम् ॥ ८६ ॥

नीता व(य)दाहमुदरं धरया जनन्या
तत्कालतोऽद्यसमयावधि मे दिवृ(द)क्षा ।
यस्याभवत्तमधुना मदनाभिरामं
पश्यम्रि(श्यामि) जा(जी)वितपतिं स भवत्प्रभावः ॥ ८७ ॥

रामः स एष [व]त साऽहमसावयोध्या
सेय सरिच्च सरयूः परिवार एषः ।
एतद्वनं ग(च) सकलं पुनराविरास्ते
मन्ये किशोर ! फलितं तव भावनायाः ॥ ८८ ॥

मन्त्रैर्व्रतैर्वितरणैः क्रतुभिस्तपोभिः
साडम्बरैः स्तवनवन्दनगीतनृत्यैः ।
तीर्थाटनैश्च न तथा सुलभस्त्रिलोक्यां
भक्त्यैक(व) किन्तु भगवानयमार्य मृग्यः ॥ ८९ ॥

पीयूषसिन्धुलहरीगुणगर्वखर्वा-
मेतां निपीय गिरमर्थवतीमुदाराम् ।
आनन्दबाष्पललिताननपङ्कजश्रीं
श्रीमानुवाच हनुमानवनीतनूजाम् ॥ ९० ॥

पूर्वावतारफलनं युवयोर्न चित्रं
लीला(लै)व ते रघुपतेरपि या दुरूहा ।
युक्ति(यत्किङ्)करोऽहमतुलप्रचुरोपकार-
भारं दधामि भुवनाधिकमद्भुतं तत् ॥ ९१ ॥

यद्वा तनाम्न रघुवीर तथापि नाहं
मन्ये मदर्थमिदमादृतमत्र चित्रम् ।
यच्चातके जलधरस्य विधोश्चकोरे
पित्रोः शिशौ च खलु कोऽपि कृपानुबन्धः ॥ ९२ ॥

ततः पटीरद्रवसान्द्रलेपनैर्वस्त्रैः सुपुष्पैरपि नन्दनार्हम्।
स्फुरत्प्रभामण्डलहेममण्डनैः सम्भावयामास तमादिपूरुषः ॥ ९३ ॥

ऊचेऽथ स म्लानमुखाम्बुजश्रियं तदा विदेहप्रसवां च राघवः(वम्)।
किमर्थमङ्ग! श्रम एष इष्यते न युष्मदीयाङ्घ्रिवियोगि मे मनः ॥ ९४ ॥

प्रस्थानकालं(ले) नितरां समीपे रामस्तमुद्वीय वचो बभाषे।
ब्रूहि त्वमह्नाय वियोगकाले यतस्तटस्था सुहृदङ्ग! चिन्त्रः(ब्रूचिः) ॥ ९५ ॥

चेलाञ्चलेनास्रवदश्रुधारामयाच(पाह)रुद्धद्वदकण्ठनालः।
रोमाञ्चितस्विन्नकपोलपालिस्ततस्तमूचे वचनं स वीरः ॥ ९६ ॥

श्रीमद्राम! भवादृशस्त्रिभुवने सर्वार्थपूर्णः प्रभु-
र्नैवास्ते तदहं त्वदेकशरणो याचे प्रणीताञ्जलिः।
मा मां विस्मर कामसुन्दरतनो! कालेऽप्यकालेऽपि वा
कारुण्यैकनिधान! ते यदुचितं तन्नाथ! सम्पादय ॥ ९७ ॥

वसूना सम्भारे मणिमयविभूपापरिकरे
विहारे वाऽऽहारे सकलपरिवारेऽपि विमुखम्।
घनश्यामे रामे रिपुजनविरामे[ऽ]नवतरं(रतं)
मनो मे विश्रान्तं रघुकुलशिरोमण्डनमणौ ॥ ९८ ॥

परादनुप्रव्रज्य(श्यादुपावर्त्य)मरुत्तनूजं सीतापतिर्यो जनयं(याञ्)चकाव(र)।
समादधे यादवराजरूपतां यथावदासीदखिलं च तत् क्षणात् ॥ ९९ ॥

रघुपतिविरहं कथं सहेत व.पिपतिरेतदहं न हन्त जाने।
अधिगतर(म)थवाऽस्ति वज्रदेहः(हं)कलयति मङ्गलजीवजे बलं सः ॥ १०० ॥

मनसा वचसा च कर्मणा यदि भक्तिर्मम राघवे दृढा।
परमः पुरुषः स सर्वविस्तुतिमेतामुररीकरिष्यति ॥ १०१ ॥

श्रीलौगाक्षिकुलारविन्दतरणिर्माध्यन्दिनिर्न्यायवि-
न्मीमांसायुगतर्कतप्रचतुरः साहित्यरत्नाकरः।
रामश्लोकशतं चकार सुकृती गोदातटप्रोल्लस-
त्पुण्यस्तम्भनिवासिकेशवसुतानन्तात्मजः केशवः ॥ १०२ ॥

॥ इति श्रीकेशवविरचितं रामशतं समाप्तम् ॥

# सोमेश्वरदेवविरचितरामशतकपद्यसूची

# केशवविरचितरामशतपद्यसूची